## सुबोधिनी

### आचार्यस्य प्रतिवचनम्

एवं पृष्टः प्रतिवक्ति-**श्रोत्रस्य** इत्यादि। ज्ञातुः पुरुषस्य शब्दसाक्षात्कारे उपकारकतया किञ्चिदिन्द्रियं श्रोत्रमुच्यते; तदपि श्रोत्रं तत्साक्षात्कारापादने स्वयं साक्षादक्षमं, परं ब्रह्मापेक्षते; तदुच्यते परं ब्रह्म '**श्रोत्रस्य श्रोत्रम्**' इति। न हि किमपि सर्वान्तर्यामिणा परब्रह्मणाऽनाहित-शक्तिकं स्वकार्याय क्षमम्। तत् श्रोत्रादीनि सर्वाण्युपकरणानि परब्रह्माहितशक्तिकान्येवोपक-रणभावं प्राप्नुवन्तीति भावः।

यत्तु-अन्तर्यामिणमर्थान्तरमवधीर्य प्रत्यगात्मानमेव **श्रोत्रस्य श्रोत्रम्** इति व्यपदिशन्ति तन्नातिरमणीयम्, न हि शब्दसाक्षात्कारे उपकारकमिन्द्रियमपेक्ष्योपक्रियमाणः पुरुषः उपकार-कभावेन श्रोत्रस्य श्रोत्रम् इति निर्देशमर्हति। न हि आलोकेन उपक्रियमाणं चक्षुः 'आलोक-स्याप्यालोक' इति व्यपदेशमर्हति। तत् श्रोत्रशब्दनिर्देशादेव श्रोतारं प्रति कस्यचिदिन्द्रियस्यो-पकरणता स्वयमवगतैव। स च अयमुपकरणभावोऽस्य सर्वतोऽन्तर्यामिणा सर्वशक्त्याधाय-केन परब्रह्मणैवेति 'श्रोत्रस्य श्रोत्रम्' इति श्रोतुरर्थान्तरमेव परं ब्रह्म स्वरसतः प्रतीयते। न तु विना श्रोत्रेण बधिरो भवंस्तद्योगेन शब्दसाक्षात्कारार्हस्तदुपजीव्यो जीवः। वाचमिति विभक्ति-व्यत्ययश्छान्दसः। यत् श्रोत्रस्य श्रोत्रं, मनसो मनो, वाचो वाचं, चक्षुषश्चक्षुः, प्राणस्य प्राण इत्यन्वयः। **चक्षुष**इत्यन्तमिन्द्रियाणामुपलक्षकम्[1]।

**स उ**-एवम्भूत एव, त्वया केनेषितम् इत्यादिना पृष्टो जानीहि इति भावः। एवं वेदनस्य फलमाह - **अतिमुच्य** इत्यादि। **अतिमुच्य** एवं ज्ञात्वा। यद्वा, **अतिमुच्य**-वयं भोक्तारः करणेषु सर्वथा स्वतंत्रा इति स्वातंत्र्यभ्रमं त्यक्त्वा स एव हृषीकेशः सर्वेन्द्रियनियन्ता सर्वं भगवान्कारयति इति अनुसन्दधानाः। **अस्माल्लोकात् प्रेत्य**-निर्गत्य, **अमृता भवन्ति** मुक्ता भवन्ति इत्यर्थः। अनेन मुक्तस्थानं लोकान्तरं व्यज्यते।

**न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः।**
**न विद्मो न विजानीमो यथैतदनुशिष्यात्॥ ३॥**

---

1 **चक्षुष इति** - मंत्रेऽनुद्धृतानां कर्मेन्द्रियाणां ज्ञानेन्द्रियाणां च इत्यर्थः।

## प्रतिपदार्थदीपिका

ब्रह्मणः स्वरूपोपदेशविधा

श्रोत्राद्यात्मभूतं ब्रह्म प्रपञ्चयति-**न तत्र चक्षुःइति**[1] । तत्र श्रोत्राद्यात्मभूतपरब्रह्मविषये चक्षुः न गच्छति, तदन्तरात्मभूतं परमात्मानं न पश्यति इत्यर्थः । **वाङ्न गच्छति**-वागिन्द्रियमपि तत्र ब्रह्मणि विषये न गच्छति; तत् प्रभावं वक्तुम् असमर्थम् । **मनः**-अन्तरिन्द्रियमपि ध्यातुमसमर्थम् ।

तर्हि कथम् उपदेष्टव्यम्? इत्यत्राह-**न विद्मः** इत्याहुः आचार्याः । **यथा**-यथावस्थितिकं ज्ञेयं वस्तु न विद्मः अन्तरिन्द्रियेण, **न विजानीमः** बाह्येन्द्रियैश्च द्रष्टुं न शक्नुमः । किन्तु 'एतत्' इति **अनुशिष्यात्**-एतत् परब्रह्म प्राकृतचक्षुरादिगोचरं न भवतीति शिष्येभ्यः उपदिशेदित्यर्थः ।

## प्रकाशिका

तदेव प्रपञ्चयति - **न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः** । तर्हि तत् कथमुपदेष्टव्यम्[2] इत्यत्राह-**न विद्मो न विजानीमः यथैतदनुशिष्यात्**-किं तदिति पृष्ट आचार्यः, 'नान्तरिन्द्रियेण न बहिरिन्द्रियेण च[3] ज्ञेयं तत्' इत्येव तदुपदिशेत् ।

## आनन्दभाष्यम्

मनःप्रभृतीनां कः प्रेरकः? इति प्रश्नस्य उत्तरं 'श्रोत्रस्य श्रोत्रम्' इत्यादिना दत्तमपि न सन्तोषमावहति, स्पष्टतया तत् स्वरूपस्यानुपदेशात् । अतः सुस्पष्टं तत् स्वरूपम् उपदिशेति शिष्याकाङ्क्षायामाह-'**न तत्र चक्षुर्गच्छति**' इत्यादि ।

ब्रह्मस्वरूपस्य इत्थमिति उपदेष्टुमशक्यत्वम्

तत्र-मनःप्राणादीनां प्रेरके परमपुरुषे **चक्षुः न गच्छति**-न स्वव्यापारं करोति । चक्षुःपदं प्रत्यक्षप्रमाणमात्रोपलक्षणम्; प्रत्यक्षप्रमाणं तत्र न उपतिष्ठत इत्यर्थः । 'अतीन्द्रियो हि सर्वेश्वरः अतः प्रत्यक्षप्रमाणागोचर इति भावः ।

---

1 **चक्षुः इति** - चक्षुः ज्ञानेन्द्रियोपलक्षणम्, वागिति कर्मेन्द्रियोपलक्षणम्, मन अन्तरिन्द्रियबोधकम् ।

2 तत् किमुपदेष्टयम् - **ख.**

3 न बहिरिन्द्रियेण - **ख,ग.**

**आनन्दभाष्यकारैः 'न तत्र चक्षुः' इति मंत्रः, 'अन्यदेव तद्विदितादथो' इति मंत्रश्च मिलित्वैव व्याख्यातः । मंत्रयोरनयोः मिलितयोः तृतीयमंत्रत्वेन परिगणनापि अवालम्बि ।**

**न वागच्छति**-वाक्पदेन वागिन्द्रियोच्चार्यशब्दप्रमाणं लक्ष्यते। तादृशः शब्दोऽपि सर्वेश्वरं बोधयितुमसमर्थः; प्रत्यक्षोपजीविनः शब्दप्रमाणस्य अतीन्द्रिये वस्तुनि प्रसरासम्भवात् इत्यर्थः।

**नो मनः**-अत्र मनःशब्देन मनोव्यापारप्रधानमनुमानप्रमाणं लक्ष्यते; तदनुमानमपि प्रत्यक्षमुपजीवति। अतः प्रत्यक्षातीते वस्तुनि अनुमानस्यापि नास्ति अवसरः। न मनः तत्र गच्छति इत्यन्वयः।

नन्वेतावतापि न सुस्पष्टमुपदिष्टो भवति सर्वेश्वरः इत्यत्राह-**न विद्मो न विजानीमो यथैतदनुशिष्यात्।** इदं दृश्यमानं वस्तु घटपटादिकं **यथा**-येन प्रकारेण कम्बुग्रीवादिमत्वादिना **अनुशिष्यात्**-उपदिशेत्, तादृशप्रकारं[1] कमपि परमपुरुषे न विद्मः। घटादिवत् केनापि प्रकारेण सुस्पष्टोपदेशानर्ह एव परमात्मा, अतो वस्तुस्वभाव एवेदृशः; नात्र उपदेशकस्य दोषः इत्यवबुध्य सन्तोषमाधेहि।

ननु विचित्रोऽत्र जगति यत्किमपि तादृशं वस्तु भवेत्; तत् उदाहृत्य, विशेषतः उपदिशतु भवान् सर्वेश्वरस्वरूपं इत्यत्राह-**न विजानीमः।** लौकिकेषु वस्तुषु लौकिका एव प्रकाराः[2] भवन्ति, नहि तेषु एकोऽपि प्रकारः परमात्मनि; येन प्रकारेण तत् विशेषेण जानीमः। अतः विशेषेण न जानीमो वयमिति कथं विशेषेण उपदिशामः? साकल्येन तस्योपदेशः, साकल्येन बोधोऽपि न सम्भवति। अतः एतावतैव सन्तोष्टव्यमिति गुरोरभिप्रायः।

## सुबोधिनी

### लौकिकप्रमाणागोचरत्वं परमात्मनः

एवमखिलेन्द्रियप्रेरकतया प्रक्रान्तस्य परमात्मनो लौकिकार्थेभ्यो वैलक्षण्यमाह-**न तत्र** इति।

लौकिको ह्यर्थः चक्षुषाप्रत्यक्षेण तदुपजीव्येन शब्देन तदुपजीव्येन अनुमानेन वा सिद्ध्यति, परमात्मा तु न तथा। यत् **तत्र चक्षुर्न गच्छति** - न हि घटादिवत् स इदङ्कारेण अनेन चक्षुषा गृह्यते, अतीन्द्रियत्वात्। न प्रत्यक्षगम्य इति यावत्। **न वागच्छति** - वागिन्द्रय-

---

1 **तादृशप्रकारम्** - तादृशाकृतिमत्वं, संस्थानित्वं वा।
2 **प्रकाराः** - ज्ञानोपायभूताः धर्माः।

साध्यः शब्दः न गच्छति-न तं प्राप्नोति। अतीन्द्रियेऽस्मिन्नर्थे प्रत्यक्षमूलशब्दो न पराक्रमते। सर्वो हि शब्दो लौकिको वागिन्द्रियसाध्यः प्रत्यक्षोपजीव्यः। लौकिकव्यवहारागम्य इति यावत्। **नापि मनः**-अत्र मन इति मनोव्यापारप्रधानमनुमानम् उच्यते; तदपि तस्मिन् न गच्छति; तस्यापि प्रत्यक्षोपजीव्यत्वात्। प्रत्यक्षातिपतितकृत्स्नधर्मे तस्मिन् प्रत्यक्षोपजीव्यसाहचर्यनियमसापेक्षस्य अनुमानस्य क्व प्रसरावकाशः? इति भावः। एतेन अलौकिकप्रमाणैकवेद्यत्वं व्यज्यते। अत्र चक्षुःशब्देन प्रत्यक्षम् उपक्रम्य वाङ्मनसयोः अभिधानात् वाङ्मनःशब्दाभ्यां तत्सजातीययोः शब्दानुमानयोः ग्रहणम् उचितम् इति तथा व्याख्यातम्।

एतत् यथाऽनुशिष्यात् तं प्रकारं तत्र न विद्म इत्यन्वयः। एतत् इति सन्निहिततरम् उच्यते[1], प्रत्यक्षतः सन्निहितम् इदं लौकिकं वस्तु येन प्रकारेण अनुशिष्यात् तं प्रकारं तत्र परमात्मनि न विद्म इत्यर्थः। लौकिकानि हि वस्तूनि त्रिकोणत्वसास्नादिमत्त्वादिभिः आकारैः[2] अनुशिष्यन्ते, परमात्मा न तैः प्रकारैः करतलामलकवत् उपदेशार्हः इति भावः।

असदृशःपरमात्मा

ननु विचित्रेषु इह उपलभ्यमानेषु यत्किञ्चित् विलक्षणाकारं निदर्शनतया वा तस्योपलक्षकं किं न स्यात् इत्यत्राह-**न विजानीमः**-तादृशं किमपि लौकिकं वस्तु विशेषतो न विजानीमः, येन विशेषेणांशतो वा निदर्शनतया तस्य परमात्मन उपलक्षकं भवेत्। यथाऽयं लौकिकप्रमाणागोचरः, तथा लौकिकैः प्रकारैरपि न उपलक्ष्य इति भावः।

यद्वा-इन्द्रियाणां प्रेरकः को देवः? इति पृष्टे **श्रोत्रस्य श्रोत्रम्** इत्यादिना श्रोत्रादीनामपि श्रोत्रं तत्तदिन्द्रियप्रकाशकः कश्चित् इत्येतावन्मात्रेण प्रतिवचनेन नातीव सुस्पष्टमुपदिष्टं तत्स्वरूपम् इत्यत्राह-**न तत्र** इति। **न तत्र चक्षुर्गच्छति न वागच्छति नो मनः**। शब्दार्थः पूर्ववत्। लौकिकं चेत् वस्तुस्वरूपं त्रिकोणत्व-सास्नादिमत्त्वादिभिः 'इदम् इत्थम् एतावत्' इति स्यान्नाम; इदं तु परमात्मस्वरूपम् अगोचरं लौकिकस्य, कथमिव लौकिकवस्तुवत् 'इदम् इत्थम् एतावत्' इति शक्नुमो निरूपयितुमिति भावः। **न विद्मः**-अलौकिकार्थावबोधकतया प्रसिद्धा वयमपि[3]

---

1 **एतत् इति सन्निहिततरम् उच्यते**-समीपतरवर्ति चैतदो रूपम् इति अभियुक्तोक्तिः अत्र स्मर्तव्या।

2 **त्रिकोणत्वसास्नादिमत्त्वादिभिः आकारैः**-त्रिकोणत्वाकारेण गोमुखम् अनुशिष्यते। सास्नादिमत्त्वेन आकारेण गौरनुशिष्यते।

3 **अलौकिकार्थावबोधकतया प्रसिद्धा वयमिति**-उपदेशकानाम् आचार्याणाम् अतीन्द्रियार्थ (अलौकिकार्थ) द्रष्टृत्वरूपर्षित्वाभ्युपगमात् इति बोद्धव्यम्।

**आनन्दभाष्ये इव सुबोधिन्यामपि मंत्रद्वयोरेकत्वेन परिगणना क्रियते।**

न विद्मो यत्स्वरूपम्, अपारत्वात्; **'यदेकैकगुणप्रान्ते श्रान्ता निगमवन्दिनः'**[1] (यादवा; 1-2) । तत् कथमिव इत्थम् एतावत् इति निरूपयितुं शक्नुम इति भावः ।

न विद्मः इति अलौकिकप्रमाणस्य वेदस्य अयं निर्देशः । वेद एव खल्वत्र गुर्वपदेशेन प्रतिवक्ति; बहुवचनेन-अनन्ताः वेदाः, तथापि कार्त्स्न्येन तत्स्वरूपं न विद्म इत्युक्तं भवति । तर्हि गुरुः शिष्यान् कथम् उपदिशति? **न विजानीमो यथैतदनुशिष्यात्-एतत्**-लौकिक-वस्तुतो विलक्षणम्, अपरिच्छिन्नम् अलौकिकार्थावबोधकैरपि अलब्धपारं तत्स्वरूपं **यथा**-येन प्रकारेण उपदिशेत्, तत् वयं न जानीमः । कार्त्स्न्येन तदुपदेशः, कार्त्स्न्येन तदव-बोधो वा असम्भावित इति भावः ।

**अन्यदेव तद्विदितादथो अविदितादधि ।**
**इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे । ४ ।**

## प्रतिपदार्थदीपिका

ब्रह्मस्वरूपप्रतिपादनविशेषः

उपदेष्टव्यं ब्रह्म पुनरपि विशिनष्टि-**अन्यदेव** इति । **ये**-पूर्वाचार्याः **नः**-अस्माकं यत् परं ब्रह्म **व्याचचक्षिरे**-उक्तवन्तः तत् **पूर्वेषां** - पूर्वाचार्याणां[2] **विदितात्**-सर्वात्मना **विदितात्** - ज्ञातात् **अन्यत्**- तद्ब्रह्म विलक्षणम् इत्यर्थः । **अथ**-अनन्तरं **अविदितात्**-पूर्वाचार्याणाम् अविदितात् सर्वप्रकारेण अविज्ञातादपि **अधि**[3]-विलक्षणम् इत्यर्थः । **इति शुश्रुम** एवं प्रका-रेण वाचं श्रुतवन्तः वयम् ।

## प्रकाशिका

ब्रह्मणः विदिताविदितविलक्षणत्वम्

ननु तस्य सर्वात्मना[4] ज्ञानाविषयत्वे तुच्छत्वं[5] स्यात्; ब्रह्मजिज्ञासया गुरूपसदनादिकञ्च[6] न

---

1 **निगमवन्दिनः** - निगमाः वेदा एव वन्दिनः ।
2 **पूर्वाचार्याणाम्** - 'पूर्वाचार्याणाम्' इति षष्ठ्याः इति शुश्रुम इत्यत्र अन्वयः । पूर्वाचार्याणां मुखात् इत्यर्थः ।
3 **अधि**-शब्दार्थकल्पद्रुमे अधि इत्यस्य अतिशयोऽर्थ उक्तः स एव विलक्षणम् इति अर्थवर्णने बीजम् ।
4 सर्वात्मना तस्य - **ख,ग.**
5 **तुच्छत्वम्** - प्रमाणसम्बन्धानर्हत्वम् ।
6 **गुरूपसदनादिकम्** - गुरुशुश्रूषादिकम्, तदाज्ञापालनञ्च ।

स्यादित्यत्राह-'**अन्यदेव तत् विदितादथो-----तद्व्याचचक्षिरे**'। **ये**-अस्माकं पूर्वे गुरवः ब्रह्मोपादिशन्, तेषाम्-'सर्वात्मना विदितादपि विलक्षणं सर्वात्मना अविदितादपि विलक्षणम् एवं रूपं ब्रह्म' इति ईदृशीं वाचं वयं श्रुतवन्तः इत्यर्थः।

## आनन्दभाष्यम्

### परमात्मनः चिदचिद्भिन्नत्वम्

ननु लौकिकार्थवत् स्पष्टमुपदेश्यत्वं नास्ति यदि, तर्हि कीदृशं तत्स्वरूपम् इत्यत्राह - **अन्यदेव तद्विदितात्**। **तत्**-परमात्मस्वरूपं **विदितात्**-ज्ञानगोचरवस्तुनः **अन्यदेव**- भिन्नमेव, कार्त्स्न्येनविदितवस्तुकोटौ नास्य अन्तर्भाव इति भावः।

ननु एवम् अविदितत्वे खपुष्पादिवत्[1] स्यात् परमपुरुषः इत्यत्राह-**अथोऽविदितादधि**। **अविदितात्** - खपुष्पादितः **अधि** - अन्यदेव परमात्मस्वरूपम्। कार्त्स्न्येन अविदितोऽपि सर्वेश्वरः, न खपुष्पादिवत् सर्वथा अविदितः, उपनिषत्प्रमाणवेद्यत्वात्; खपुष्पादिकं केनापि प्रमाणेन न वेद्यते इति भेदः इति भावः।

**इति**-एवंप्रकारवचनम् **शुश्रुम**-श्रुतवन्तो वयम्। कुतः इति आकांक्षायामाह-**पूर्वेषाम्**-पूर्वेभ्यः आचार्येभ्यः इत्यर्थः; इह पञ्चम्यर्थे षष्ठी। केभ्यः पूर्वेभ्यः? इत्यत्राह-**ये**-पूर्वाचार्याः **नः**- अस्माकं कृते, **तत्**-परमपुरुषस्वरूपं, **व्याचचक्षिरे**-विविच्य उपदिष्टवन्तः; तेभ्यः श्रुतवन्तो वयम् इत्यर्थः।

पूर्वकालीना आचार्याः सम्यक् भगवत्स्वरूपमालोच्य अस्मान्प्रति ईदृशमेव वचनम् उक्तवन्तः, यत् परमात्मस्वरूपं साकल्येन उपदेशयोग्यं, साकल्येन ज्ञानयोग्यं वा नास्त्येव। अतः विदितेभ्यः अविदितेभ्यश्च भिन्नम्, वेदशिरस्समुदाय[2] समुपपादितमेव वेद्यं भवति इति भावः।

यद्वा अविदितशब्देन अचिदंशः उच्यते, विदितशब्देन तु चिदंशः, ताभ्यां चिदचिद्भ्याम् अन्यः एव सर्वेश्वरः तदन्तर्यामी इति व्याख्येयम्।

---

1 **खपुष्पादिवत्**-सर्वथाऽविदितखपुष्पादिवत् इत्यर्थः।

2 **वेदशिरस्समुदायः**-उपनिषदां समुदायः।

## सुबोधिनी

### परमात्मनः अनुशास्यत्वप्रकारः

उक्तं लौकिकार्थवदननुशास्यत्वम् अतिपतितसकललौकिकप्रकारस्य अपरिच्छिन्नस्य परमात्मनः। तर्हि कथम् असौ अनुशास्यः? तदाह-**अन्यदेव** इति। तत् परमात्मस्वरूपम्, **विदितात् अन्यत्**-नास्य विदितकोटौ अन्तर्भावः। तर्हि ज्ञानागोचरत्वेन तुच्छता स्यात् अत आह - **अथो अविदितादधि - अविदितात्** - ज्ञानागोचरात्, **अधि** - अन्यत् इत्यर्थः। 'इदम् इत्थम् एतावत्' इति परिच्छिद्य ज्ञातुम् अशक्यतया विदितम् इत्यपि वक्तुं न शक्यते, शास्त्रवेद्यस्वरूपत्वात् ज्ञानागोचरम् इत्यपि वक्तुं न शक्यते। एवमेव तद्वस्तुस्वरूपम् उपदेश्यम् इति भावः। **ये नः तत्** - परमात्मस्वरूपं **व्याचचक्षिरे,** तेषां संप्रदायपरम्पराप्राप्तम्, **इति** - एवं प्रकारं वचः **शुश्रुम** - श्रुतवन्तः।

### चिदचिद्विलक्षणः परमात्मा

यद्वा-उक्तं लौकिकप्रमाणागम्यत्वम् अलौकिकप्रमाणगम्यत्वं च; अपरिच्छित्तेः। अत एव तत् चिदचिदात्मकात् जगतः अन्यदेव इत्याह - **अन्यदेव** इति। इह जगति संसृष्टे चिदचिदंशे, अचिदंशं सर्व एव जानन्ति पण्डितपामराविशेषेणेति अचिदंश उच्यते **विदितम्** इति शब्देन। अधिकारिविशेषप्रमाणविशेषानुपहितो हि वेदनशब्दः पण्डितपामरसाधारणं वेदनमेव स्वरसतोऽवगमयेत्। **अविदितमिति** शब्देन विदितशब्दोपात्तादचिदंशात् अन्यः चेतनांश उच्यते। ताभ्यामन्यत् उक्तपरमात्मस्वरूपम् इति भावः। **इति शुश्रुम** इत्यादि यथाव्याख्यातम्।

**यद्वाचानभ्युदितं येन वागभ्युद्यते।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते। ५।**

## प्रतिपदार्थदीपिका

### वाक्प्रकाशकब्रह्मस्वरूपोपदेशः

**यत्** - परं ब्रह्म **वाचा** - वागिन्द्रियेण **अनभ्युदितम्** - अप्रकाशितम् **येन** - परब्रह्मणा **वाक्**-वागिन्द्रियम् **अभ्युद्यते**-प्रकाशते **तदेव ब्रह्मेति विद्धि**-विजानीहि **त्वम्**। जनाः **यत्**-वस्तु **इदम्** इति इदंत्वाकारेण **उपासते** - पश्यन्ति इत्यर्थः। **तदिदम्** - प्रपञ्चरूपम् - **ब्रह्म न** - पूर्वोक्तम् उपदेष्टव्यं ब्रह्म न भवति इत्यर्थः।

## प्रकाशिका

वागादि इन्द्रियप्रकाशकं ब्रह्म

एतदेव प्रपञ्चयति - **'यत् वाचाऽनभ्युदितं......नेदं यदिदमुपासते'।** वागादिभिर्यदप्रकाश्यं[1] स्वयं वागादि इन्द्रियप्रकाशकञ्च, **तदेव ब्रह्म**[2] इति जानीहि।

यद्वस्तु इदम् इति इदङ्कारगोचरतया हस्तामलकवत् सुविदिततया उपासते जनाः, तत् ब्रह्म न इत्यर्थः। एवम् उत्तरत्रापि।

## आनन्दभाष्यम्

मनःप्रभृति प्रेरकं परं ब्रह्म श्रुतिभिरपि न साकल्येन समुपदेष्टुं शक्यते, अतः साकल्येन समुपदेशाय नाग्रहः[3] सेवनीयः इति भावेन गुरुरुपदिशति - **'यद्वाचानभ्युदितम्'** इति।

तत्तदिन्द्रियव्यापारकारकब्रह्मस्वरूपोपदेशः

**यत्**-मनःप्राणादिप्रवर्तकं परं ब्रह्म **वाचा**- अनादिनिधनया[4] वेदवाण्या, **अनभ्युदितम्** - साकल्येन न प्रकाशितम्। कः तत्र प्रसरः इतरवाण्या? इति भावः। **येन च** - परब्रह्मणा प्रवर्तिता सत्येव **वाक् अभ्युद्यते** - समुच्चार्यते पुरुषैः इति शेषः।

**तदेव ब्रह्म** - मनःप्रभृतिप्रेरकम् इति, **त्वम्** - ब्रह्मजिज्ञासुः शिष्यः, **विद्धि** - जानीहि। **यदिदम्** - दृश्यमानं जगत् चिदचित्स्वरूपम् **उपासते** - कामाकुलितमनसः जीवा इति शेषः। **तत् इदं** दृश्यमानं चिदचित्स्वरूपं जगत्तु न ब्रह्म इति बुध्यस्व इति भावः।

## सुबोधिनी

ब्रह्मणः इदङ्कारगोचरादन्यत्वम्

वागादिप्रकाशकं तैः अप्रकाश्यं परमात्मस्वरूपम् इदङ्कारगोचरात् अन्यदेव अपरिच्छिन्नम् इत्याह - **यद्वाचा** इत्यादिना। **यत्** - परमात्मस्वरूपम्, **वाचा** - वागिन्द्रियेण, **अनभ्युदितम्** अप्रकाश्यम्; वेदवाण्या अपि सुदूरम्। **येन** - परमात्मना, **वाक्** - वागिन्द्रियम्, **अभ्युद्यते** प्रकाश्यते, **तदेव ब्रह्म विद्धि** - जानीहि। परिच्छिन्नतया हस्तामलकवत्[5]

---

1 वागादीन्द्रियप्रकाशकञ्च यत् - ग. 2 ब्रह्म - ख,ग.

3 **आग्रहः** - 'आग्रहो अनुग्रहासक्त्योराक्रमे ग्रहणेऽपि च' इति मेदिनी।

4 **अनादिनिधनया** - न विद्यते आदि निधने-अन्तः नाशो वा यस्याः सा; तया इति। नित्यया इत्यर्थः।

5 **हस्तामलकवत्** - करतले स्थितम् आमलक्याः फलवत् सुस्पष्टम्।

इदङ्कारगोचरं **यत् उपासते नेदं ब्रह्म** इति शेषः । स्वरूपतो गुणतश्च सर्वतो यत् बृहत्, तस्मिन् इन्द्रियाणामपि प्रकाशके तैः अप्रकाश्ये परिच्छिन्न इव कथम् इदं ब्रह्मेति सुस्पष्टनिर्देशो घटेत? तत् इदम् इति यदुपासते न तत् ब्रह्म इति भावः ।

**यन्मनसा न मनुते येनाहुर्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । ६ ।**

## प्रतिपदार्थदीपिका

मनसो ग्राहकत्वं ब्रह्मस्वरूपायत्तम्

**यत्** - यद्ब्रह्म, **मनसा** - अन्तःकरणेन, **न मनुते** - ज्ञातुम् अशक्यं **येन** - ब्रह्मणा, **मनः मतम्** - ज्ञातम् इत्याहुः । **तदेव ब्रह्म इति** - परं ब्रह्म इति, **त्वं विद्धि** - विजानीहि **यत्** - यज्जगत् **इदमुपासते** - 'इत्थम् ईदृशम्' इति **उपासते** - पश्यन्ति इत्यर्थः । इदं परिदृश्यमानं[1] जगत् **न** - परब्रह्म न भवति इत्यर्थः ।

## प्रकाशिका

अत्र रङ्गरामानुजभाष्यम् नास्ति

## आनन्दभाष्यम्

**यत्** - मनःप्रभृतिप्रेरकं ब्रह्म, **मनसा** - मनोरूपेण इन्द्रियेण, **न मनुते;** 'कश्चिज्जीवः' इति शेषः । 'इदं ब्रह्म इत्थम्' इति, साकल्येन मनोद्वाराऽपि कश्चित् जीवः न वेत्तुम् अर्हति इति भावः । **येन** - परब्रह्मणा **मनः** - अन्तःकरणरूपं मनः, प्रकाशितं भवति । यद्वा, **येन** - ब्रह्मणा मनः प्रेरितं सत्, **मतम्** स्वव्यापारयुक्तं भवति, इत्याहुः 'प्राचीनाः आचार्याः' इति शेषः । तदेव मनःप्रभृतिप्रेरकं 'ब्रह्म' इति **त्वं विद्धि । नेदम्** इत्यादीनां पूर्ववदेवार्थः ।

## सुबोधिनी

**यत्** परमात्मस्वरूपं कश्चिदपि जनो **मनसा**-करणेन **न मनुते** । 'इदम् इत्थम्' इति साकल्येन

1 **इदं परिदृश्यमानम्** - इदमः प्रत्यक्षगतम् इति वचनात् ।

न वेद। **येन** - परमात्मना **मनः, मतम्** - विषयीकृतम्, प्रकाशितम् इत्येतत्। यद्वा, मतमिति भावे 'क्तः', मनोवृत्तिः उच्यते, 'अर्श आद्यच्'[1], येन परमात्मना मनो मननव्यापारयुक्तं भवति। 'मनसो मनः' इत्येतत्। तदेव इत्यादि व्याख्यातम्।

**यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते।७।**

## प्रतिपदार्थदीपिका

### चक्षुरिन्द्रियप्रकाशकं ब्रह्म

**यत्** - परं ब्रह्म **चक्षुषा न पश्यति** - चक्षुरिन्द्रियं न पश्यति, **येन** - परब्रह्मणा **चक्षूंषि** -चक्षुरिन्द्रियाणि **पश्यति**[2] - प्रकाश्यन्त इत्यर्थः। शिष्टं पूर्ववत्।

## प्रकाशिका

**'यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति'**। येन परमात्मना साधनेन पुमान् इतरत् पश्यति इत्यर्थः।

## आनन्दभाष्यम्

**यत्** - परब्रह्मस्वरूपं, **चक्षुषा** - चक्षुरिन्द्रियेण **न पश्यति** - न जानाति; 'कश्चित् जीवः' इति शेषः। **येन** - सर्वेश्वरेण प्रेरितानि **चक्षूंषि** - चक्षुरिन्द्रियाणि **पश्यति,** छान्दसत्वात्[3] वचनव्यत्यासः। पश्यन्ति - स्वविषयप्रकाशकानि भवन्ति इत्यर्थः।

यद्वा, पश्यन्ति - दृश्यन्ते इत्यर्थः; परमात्मना दृश्यन्ते चक्षूंषि, अतीन्द्रियत्वं तु तेषां अस्मदाद्यपेक्षया; न परमात्मापेक्षया इति भावः।

अत्र पक्षे पश्यति इत्यत्र वचनव्यत्यासः, कर्मार्थे कर्तृप्रत्ययश्च छान्दसत्वादेव अवगन्तव्यः। तदेव इत्यादेः उत्तरार्धस्य पूर्ववदेव अर्थः अनुसन्धातव्यः।

1 **अर्श आद्यच्** - अर्शआद्यचः वैशिष्ट्यमर्थः।

2 **पश्यति** - बहुत्वार्थे एकवचनम्, कर्मार्थे कर्तृप्रत्ययश्च छान्दस इति बोद्धव्यम्।

3 **छान्दसत्वात् इति** - कर्मार्थक'यक्'प्रत्ययघटिते 'दृश्यन्ते' इति पदे प्रयोक्तव्ये, कर्त्रर्थकशब्विकरणघटितस्य पश्यन्ति इति पदस्य प्रयोगः 'व्यत्ययो बहुलम्' इति व्यत्ययानुशासनात् समाधेयः इति भावः।

## सुबोधिनी

यत्परमात्मस्वरूपं कश्चिदपि चक्षुषा करणेन न पश्यति । येन सुसहायेन[1] **चक्षूंषि पश्यति**- रूपग्रहणं कुर्वन्ति । **पश्यति** इति वचनव्यत्ययश्छान्दसः । अन्यद्यथाव्याख्यातम् ।

**यत् श्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । ८ ।**

## प्रतिपदार्थदीपिका

श्रोत्रेन्द्रियप्रकाशकं ब्रह्म

**यत्** - परं ब्रह्म, श्रोत्रेन्द्रियेण **न शृणोति** - न श्रुतं भवति । **येन** - परब्रह्मणा **श्रोत्रमिदं श्रुतं** भवति विषयीकृतं भवति । **तदेव ब्रह्म इति विद्धि** - इदं जगत् ब्रह्मेति न विजानीहि इति भावः ।

## प्रकाशिका

अत्र रङ्गरामानुजभाष्यं नास्ति

## आनन्दभाष्यम्

**यत्** - सर्वेश्वरस्वरूपम्, **श्रोत्रेण** - इन्द्रियेण, **न शृणोति** कश्चित् श्रावणप्रत्यक्षविषयं न कुरुते; तत्स्वरूपस्य श्रोत्रेन्द्रियाऽविषयत्वात् । **येन** - परब्रह्मणा प्रेरितं सत् **श्रोत्रम्** - इन्द्रियम् **श्रुतम्** - श्रावणप्रत्यक्षविषयीकृतं भवति । यद्वा **श्रुतम्** - स्वविषयकप्रत्यक्षजननरूपस्वव्यापारसमर्थं भवति इत्यर्थः । उत्तरार्धं तु प्राग्वदेव व्याख्येयम् ।

## सुबोधिनी

यत्परमात्मतत्त्वं न कश्चित् श्रोत्रेणानेन साधनेन **शृणोति**, श्रोत्रेन्द्रियागोचरम् इत्येतत् । येन सहायेन **श्रोत्रं श्रुतम्** - श्रवणसमर्थं भवति इत्येतत् । तदेव इत्यादि यथाव्याख्यातम् ।

**यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । ९ ।**

1 **सुसहायेन** - सर्वप्रेरकेण ।

## प्रतिपदार्थदीपिका

### प्राणप्रकाशकं ब्रह्म

**यत्** - ब्रह्म, **प्राणेन** - प्राणवायुना, नासिकापुटान्तरवर्तिना[1] घ्राणेन्द्रियेण[2], **न प्राणिति** - गन्धवत् न विषयो भवति, **येन** - परब्रह्मणा, **प्राणः प्रणीयते** - प्रकाश्यत इत्यर्थः। **तदेव ब्रह्म त्वं विद्धि, इदम्** - प्रपञ्चं ब्रह्म इति **न** विजानीहि इत्यर्थः।

## प्रकाशिका

**'यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते' - प्रणीयते** - प्राणिति इत्यर्थः[3]।

## आनन्दभाष्यम्

**यत्** - मनःप्राणादिप्रेरकपरमात्मतत्त्वम्। **प्राणेन** - प्राणाख्येन करणेन **न प्राणिति** - न चेष्टते, जीवनापरपर्यायप्राणनव्यापारवत् न भवति इति यावत्।

**येन** - परब्रह्मणा, **प्राणः** - शरीरधारणकर्तृतया प्रसिद्धः प्राणः **प्रणीयते** - प्रेर्यते; यत्प्रेरितः सन् शरीरधारणात्मस्वव्यापारवान् भवति इत्यर्थः। तदेव ब्रह्मेत्यादेः प्राग्वदर्थः।

## सुबोधिनी

यदात्मतत्त्वं प्राणेन साधनेन **न प्राणिति** - न प्राणनव्यापारविशिष्टं भवति। **येन** - परमात्मना साधनेन **प्राणः प्रणीयते** - प्राणनव्यापारयुक्तो भवति। **तदेव ब्रह्म त्वं विद्धि** - पूर्ववत्।

**प्रथमखण्डः समाप्तः**

---

1 **नासिकापुटान्तरवर्तिना इति** - नासाग्रवर्तिना घ्राणेन्द्रियेणेति तात्पर्ये नासिकापुटान्तरवर्तिनेति प्रयोगः।

2 **घ्राणेन्द्रियेण** - घ्राणेन्द्रियस्य इत्यर्थः।

3 प्रणीतमित्यर्थः - **ग**

### द्वितीयखण्डः

**यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं**
**त्वं वेत्थ ब्रह्मणो रूपम् ।**
**यदस्य त्वं यदस्य देवेषु अथ नु**
**मीमांस्यमेव ते मन्ये विदितम् ।१।**

## प्रतिपदार्थदीपिका

ब्रह्म साकल्येन ज्ञातं न भवति

शिष्यं प्रत्याचार्य आह - **यदि मन्यस इति** - अहं ब्रह्मस्वरूपं **सुवेद** - सुष्ठु वेद इति **त्वं मन्यसे यदि,** तत्, **दभ्रमेव** - अल्पमेव, **नूनम्** - निश्चितम्। अस्य ब्रह्मणः, **यत्** - इह लोके विद्यमानम् **अस्य ब्रह्मणो रूपम्** - रामकृष्णादिविभवरूपं, **वेत्थेति यदि मन्यसे,** तदपि **दभ्रम्** - अल्पमेव, **नूनम्** - देवेषु ब्रह्मरुद्रादिमध्यस्थं, **यदस्य ब्रह्मणो रूपम्** - व्यूहरूपं वेत्थ इति **यदि त्वं मन्यसे** तदपि **दभ्रम्** अल्पम्; अनेन एतत्सर्वं ब्रह्मस्वरूपं त्वया अज्ञातमेव इत्यर्थः। **अथ नु** - अनन्तरम्, अतःपरं विभवव्यूहादिभ्यां परं परब्रह्मस्वरूपं **ते** - त्वया, **मीमांस्यम्**[1] - अर्थतो विचार्यम्। एतदाचार्यवाक्यं श्रुत्वा, पुनः शिष्य आह - इतःपूर्वं मया सम्यक् न विदितमेव, अद्य विचारणानन्तरम् अहं ब्रह्मस्वरूपं **विदितम्** इति **मन्ये ।**

## प्रकाशिका

शिष्यं प्रत्याह - **'यदि मन्यसे सुवेदेति........अथ नु मीमांस्यमेव ते'।** 'अहं ब्रह्मस्वरूपं सुष्ठु वेद' इति **यदि मन्यसे;** न तत् तथा। अस्य ब्रह्मणः इह लोके यदपि रूपं त्वं वेत्थ, तन्नूनं **दभ्रमेव** अल्पमेव[2] । देवेषु यद्रूपं **त्वं वेत्थ,** तदपि **दभ्रमेव** - अल्पमेव। त्वया ज्ञातं सर्वं ब्रह्मणो रूपम् अल्पमेव; न सर्वं ब्रह्मरूपं त्वया ज्ञातम्। अतःपरमेव ते ब्रह्म विचार्यम्[3]; नातः पूर्वं सम्यग्विचारितम् इत्यर्थः। एतद्वाक्यं श्रुत्वा, सम्यग्विचार्य शिष्य आह - **'मन्ये विदितम्'** - अहं विदितमेव मन्ये[4] ।

---

1 **मीमांस्यम्** - 'मान्बधदान्' इत्यादिपाणिनिसूत्रेण 'मानेर्जिज्ञासायाम्' इति वार्तिकसंवलितेन निष्पन्नः मीमांसाशब्दोऽयं पूज्यविषयविचारवाचीति भावः।

2 दभ्रमेव - **ख,ग.** 3 ते विचार्यम् - **ख,ग.**

4 **अहं विदितमेव मन्ये** - विदितमेव इति अहं मन्ये इत्यन्वयः।

## आनन्दभाष्यम्

### ब्रह्मणः साकल्येन ज्ञानागोचरत्वदृढीकरणम्

यत् साकल्येन सर्वेश्वरस्य ज्ञानागोचरत्वं 'नेदं यदिदमुपासते' इत्यादि वाक्यप्रतिपादितम्, तदेव दृढीकर्तुं गुरुः उपदिशति **यदि मन्यसे** इति।

हे शिष्य! **सुवेद** - सम्यक् जानामि ब्रह्मणो रूपम्; अहमिति शेषः। **इति यदि मन्यसे** - अभिमानं कुरुषे, तदा **त्वं नूनम्** - निश्चितं, **दहरमेव**[1] - अल्पमेव **ब्रह्मणो रूपं वेत्थ** - जानासि; ब्रह्मणः स्वरूपस्य अनन्तत्वेन सम्यग्ज्ञानानर्हत्वात्। त्वम् इत्यत्र सप्तम्यर्थे प्रथमा; छान्दसत्वात्ः; अतः त्वयि शिष्ये, **यत्** - ब्रह्मणो रूपम् अन्तर्यमनकर्तृ। **अथ** शब्दः अप्यर्थकः। **देवेष्वथ** - देवेष्वपि **अस्य** - ब्रह्मणः यद्रूपम् **ते** - त्वया **विदितम्** - ज्ञातम् तत्तु **मीमांस्यमेव नु**- विचारणीयमेव सांप्रतम्। अनन्तस्वरूपस्य ब्रह्मणः इदानीमपि त्वया कार्त्स्न्येन अज्ञातत्वात्; कार्त्स्न्येन ज्ञानानर्हस्वभावं हि परं ब्रह्म। अतः यत् ज्ञातं तदल्पमेव ज्ञातम्, मीमांसनीयता तिष्ठत्येव ब्रह्मणि त्वयापि इति भावः।

## सुबोधिनी

### ब्रह्मणः परिच्छिद्य ज्ञानागोचरता दृढीकरणम्

ब्रह्मस्वरूपस्य परिच्छिद्य ज्ञानागोचरता 'नेदं यदिदमुपासत' इत्यादिनोक्ता; तामेव द्रढयति **यदि मन्यस** इति।

अहं ब्रह्मस्वरूपं **सुवेद** - सुस्पष्टं जानामि इति **यदि मन्यसे** तर्हि त्वया ब्रह्मस्वरूपं परिच्छिन्नमेवावगतं स्यात् इत्याह - **दभ्रमेवापि नूनम्। दभ्रमेव तत्** -अल्पमेव तत्। अस्य ब्रह्मणो रूपं यदिह लोके त्वं वेत्थ, यच्चास्य रूपं देवेषु वा त्वं वेत्थ, तदुभयं दभ्रमेव इत्यन्वयः।

अयं भावः - यत् सुस्पष्टं प्रतीयते तेन परिच्छिन्नेन भाव्यम्, न हि अपरिच्छिन्नं वस्तु करतलामलकवत्[2] साकल्येन सुस्पष्टं प्रतीयेत। तद्ब्रह्मस्वरूपं सुवेद इति वदता त्वया परिच्छिन्नमिह वा देवेषु वा अवधृतं स्यात्; हन्त! परिच्छिन्नमेव त्वया अवधृतम्, तद्ब्रह्म त्वया नावधृतमेव इति।

---

1 **दहरमेव** - इतरेषु भाष्येषु 'दभ्रम्' इति, अत्र भाष्ये 'दहरम्' इति च पदग्रहणम्।

2 **करतलामलकवत्** - परिच्छिन्नत्वेन सुस्पष्टप्रतीतकरतलस्थितामलकसदृशम्।

**अथ** - इतःपरम्, **ते** - त्वया मीमांस्यमेव ब्रह्मस्वरूपमिति शेषः। ब्रह्मस्वरूपं न सम्यगवधृतम्, पुनर्विचार्यम् इति भावः। एवमुक्तः शिष्यः किञ्चित् विचार्य आह - **मन्ये विदितम् इति।**

**नाहं मन्ये सुवेदेति नो न वेदे[1] ति वेद च।**
**यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ।२।**

## प्रतिपदार्थदीपिका

### शिष्यस्य ब्रह्मस्वरूपज्ञानम्

त्वया कथं विदितम् इत्यत्राह शिष्यः - **नाहं मन्य** इति **अहं** ब्रह्म **सुवेद इति** - सम्यग्वेद इत्यपि **न मन्ये, नो न वेद इति** न वेद इत्यपि न मन्ये, **वेद च** - चकारः, त्वर्थकः। अपितु **वेदैव मन्ये**। अनेन सर्वाज्ञातृत्वं नास्ति, किञ्चित्ज्ञातृत्वमस्ति इत्यर्थः। **नः** - अस्माकं **ब्रह्मचारिणां मध्ये** मदुक्तं, **'नो न वेद - वेद च'** इति। **तत्** - अर्थतत्त्वं **यो वेद** सः **तत्** -ब्रह्म **वेद** इत्यर्थः।

## प्रकाशिका

कथमित्यत्राह - **नाहं मन्ये सुवेदेति नो न वेदेति वेद च। अहम्** - सम्यग्वेद इत्यपि **न मन्ये**; न वेदेत्यपि न। अपि तु वेदैव। ततश्च कार्त्स्न्येन ज्ञातत्वमज्ञातत्वञ्च[2] नास्ति; किञ्चित्ज्ञातत्वमस्तीत्यर्थः[3]। **'यो नस्तद्वेद तद्वेद नो न वेदेति वेद च' नः**[4] -अस्माकं **ब्रह्मचारिणां मध्ये तत्** - 'नो न वेदेति वेद च' इति निर्दिष्टं तत् अर्थतत्वं यो वेद, सः तद्ब्रह्म वेद इत्यर्थः।

## आनन्दभाष्यम्

ननु ममाज्ञस्य शिष्यस्य साकल्येन ब्रह्मस्वरूपज्ञानाभावेऽपि गुरुवर्यस्य भवतस्तु सम्यग्ज्ञानित्वं स्यादेव; सम्यग्ज्ञानित्वेन विश्रुतो हि भवान्, इत्याकाङ्क्षायामाह गुरुः - **नाहं मन्ये** इति।

1 **वेद** - पूर्वार्धे अयं धातुः उत्तमपुरुषः। उत्तरार्धे 'यो नस्तद्वेद तद्वेद' इत्यत्र तु प्रथमपुरुषः।

2 कार्त्स्न्येनाज्ञातृत्वं चास्ति - **ख,ग.** 3 ज्ञातत्वमप्यस्तीत्यर्थः - **ख,ग.**

4 **नः** - नः इति निर्धारणे षष्ठी; निर्धारणेन मध्यत्वरूपार्थः फलति।

## गुरोः ब्रह्मस्वरूपज्ञानम्

**सुवेद** - सम्यग्जानाति ब्रह्मस्वरूपम् अयमाचार्य इति लोकाः वदन्ति; अतोऽहं तथा विश्रुतः, **अहम्** - आचार्यस्तु **सुवेदेति** - सम्यक् जानामि इति **न मन्ये** - सम्यक्ज्ञानित्वाभिमानं न करोमि। तर्हि भवानपि सर्वथा न वेत्ति किम्? इत्यत्राह **नो न वेदेति, न वेद** - न जानामि इति न; किन्तु **वेद** - जानाम्येव, अनन्तत्वात् साकल्येन न जानामि; तथापि गुरूपदिष्टरूपेण तु जानाम्येव इति भावः।

**नः यः तद्वेद सः नो तद्वेद** इति योजना; 'इति, वदति' इति पदद्वयमध्याहृत्य योजनीयम्। तथा च **नः** ब्रह्मज्ञानित्वेन विश्रुतानामस्माकं मध्ये **यः** - कोऽपि आचार्यः **तत्** - ब्रह्मस्वरूपं **वेद** - कार्त्स्न्येन अहं जानामि इति वदति, **सः** तादृग्ज्ञानाभिमानी **नो** - नैव **तत्** - ब्रह्मस्वरूपं **वेद** - जानाति इत्यर्थः। ब्रह्मस्वरूपस्य, साकल्येन ज्ञानाभिमानी अस्मादृशविश्रुतोऽपि, नैव सम्यक् जानाति इति भावः।

**यश्च न वेदेति वदति स वेद** इति योजना। तथा च **यः न वेद** - ब्रह्मस्वरूपं साकल्येन न जानामि अहम् इति वदति **स वेद** - जानाति सम्यक्। ब्रह्मस्वरूपस्य साकल्येनाज्ञेयस्वभावतया अहं साकल्येन न जानामि इति ज्ञानवानेव सम्यक् ज्ञानवान्; ब्रह्मणः अपरिच्छिन्नत्वस्य तेन ज्ञातत्वात्। अहं सम्यक् जानामि इति ज्ञानवांस्तु परिच्छिन्नत्वमेव ब्रह्मणो ज्ञातवान्, अतः स न सम्यग्ज्ञानीति भावः।

इत्थमेव ब्रह्मणो गुणानामविज्ञाने। यः साकल्येन ब्रह्मगुणान् जानामीति मन्यते, स न सम्यग्ज्ञानी; तद्गुणानाम् अनन्तत्वेन साकल्येन ज्ञातुम् अनर्हत्वात्। ब्रह्मगुणान् (यः) साकल्येन न जानामीति मन्यते, स एव तद्गुणविज्ञानी अपरिच्छिन्नत्वेन तत्तद्गुणज्ञानात् इति बोध्यम्।

## सुबोधिनी

### शिष्येण ज्ञातब्रह्मस्वरूपप्रकारः

विदितं तदेवाह - **नाहम्** इत्यादि। अहं सुवेद इति यदि मन्ये,तदा मया अवगतं दभ्रमेव स्यात्, नाहं मन्ये तथा इत्याह - **सुवेदेति नाहं मन्ये** - अहं सम्यग्जानामि इति न मन्ये। किं तर्हि जानासि इत्यत्राह - **न वेदेति न** - न जानामि इत्यपि न। किन्तु **वेद च** - जानाम्येव। अपरिच्छिन्नत्वात् कार्त्स्न्येन न ज्ञातम्; यथोपदिष्टं तु ज्ञातम् इति भावः।

एवं शिष्यः स्वेनावगतप्रकारमुक्त्वा अथ अस्माकं सब्रह्मचारिणां मध्ये अन्योऽपि यदि मदवगतप्रकारेण विद्यात्, स एव तद्ब्रह्म विद्यादित्याह - **यो न** इति। **नो न वेदेति वेद च** इति स्वोक्तवचनानुकरणम्; इतीति शेषः, तत् इत्यत्र अन्वयः। **नो न वेदेति वेद च** इति मयोक्तं तद्वचनम् इत्यर्थः। **नः** - अस्माकं मध्ये, **यो वेद,** स तत् ब्रह्मस्वरूपं वेद। एतेन गृहीतार्थे दृढनिश्चयो व्यञ्जितः।

**यस्यामतं तस्य मतं मतं यस्य न वेद सः।**
**अविज्ञातं विजानतां विज्ञातमविजानताम् ।३।**

## प्रतिपदार्थदीपिका

### आचार्यशिष्यसंवादनिष्पन्नार्थः

एवं शिष्याचार्यसंवादात् परिनिष्पन्नम् अर्थमाह श्रुतिः - **यस्य** -ब्रह्मविदः, परं ब्रह्म **अमतम्** - अपरिच्छिन्नत्वेन दुर्ज्ञेयम् इति सम्मतम्, **तस्य** - ज्ञानिनः **मतम्** - सम्यग्ज्ञातम् इत्यभिप्रायः। **यस्य** - अविदुषः ब्रह्म परिच्छिन्नत्वेन **मतम्** - ज्ञातम् इति सम्मतम् **सः** - अविद्वान् **न वेद** - ब्रह्म न विजानाति। **विजानताम्** - ब्रह्म एतावत् इति परिच्छेदज्ञानवताम् **अविज्ञातम्** - ब्रह्म अविज्ञातं भवति। **विज्ञातमविजानताम्** - 'ब्रह्म अपरिच्छिन्नम्' इति ज्ञातवतां **विज्ञातम्** - विशेषतः ज्ञातं भवति इत्यर्थः।

## प्रकाशिका

### ब्रह्मणः कृत्स्नज्ञानमानिनामज्ञत्वम्

**यस्यामतं तस्य मतं मतं यस्य न वेद सः। यः** (यस्तु) परिच्छिन्नत्वेन ब्रह्म न मनुते, स ब्रह्म मनुते। यस्तु परिच्छिन्नत्वेन ब्रह्म मनुते, स तु न जानाति इत्यर्थः। **अविज्ञातं विजानतां विज्ञातमविजानताम्** - ब्रह्म एतावत् इति परिच्छेदज्ञानवतां ब्रह्माऽविज्ञातं भवति; परिच्छिन्नत्वज्ञानशून्यानां ब्रह्म विज्ञातं भवति इत्यर्थः।

उक्तञ्च भगवता भाष्यकृता - **'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह'** (तै.उ.-आ.9) इति ब्रह्मणोऽनन्तस्य अपरिमितगुणस्य वाङ्मनसयोः 'एतावत्' इति परिच्छेदायोग्यत्व-श्रवणेन 'ब्रह्म एतावत्' इति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्म अविज्ञातम् अमतम् इत्युक्तम्; अपरि-

च्छिन्नत्वात् ब्रह्मणः। अन्यथा **'यस्यामतं तस्य मतम्', 'विज्ञातमविजानताम्'** इति तत्रैव मतत्व-विज्ञातत्ववचनं विरुद्ध्येत इति। ततश्च अविज्ञातत्वादिवचनं[1] कार्त्स्न्येन ज्ञानाविषयत्वपरम्; न तु सर्वात्मना ब्रह्मणः ज्ञानागोचरत्वपरम् इति[2] द्रष्टव्यम्। तथाहि सति, **'ब्रह्मविदाप्नोति परम्'** (तै.उ.आ.1), **'तमेव विदित्वाऽतिमृत्युमेति'** (श्वे.उ.3.8) इत्यादि शास्त्राणाम्[3] असंगतार्थकत्वप्रसङ्गात्[4], वेदान्तानां[5] नैरर्थक्यप्रसंगाच्च।

## आनन्दभाष्यम्

एवं द्वितीयमंत्रस्य उत्तरार्धेन 'यो नस्तद्वेद' इत्यादिना ब्रह्मस्वरूपस्य साकल्येन श्रवणरूपज्ञानागोचरत्वम् उपपादितम्। संप्रति मनननिदिध्यासनगोचरत्वमपि साकल्येन तस्य नास्ति इति वदति - **यस्यामतम्** इति।

ब्रह्मणः मनननिदिध्यासनागोचरत्वम्.

**यस्य** - जनस्य, ब्रह्म मया **अमतम्** - साकल्येन न मननविषयीकृतम् इति बुद्धिरस्ति **तस्य** ज्ञानिनः कृते, ब्रह्म **मतम्** - मननविषयीकृतमेव विचारितमेव इति यावत्; ब्रह्मणोऽनन्तत्वस्य तेन अवधारणात्। **यस्य** तु ब्रह्म मया **मतम्** - साकल्येन मननगोचरीकृतं, विचारितम् इति यावत्, इति बुद्धिः अस्ति **स** जनः **न वेद** न ब्रह्मविषयकमननवान्; ब्रह्मणोऽपरिच्छिन्नत्वस्य तेनाज्ञातत्वात्। तथा **विजानतां** ब्रह्म मया सम्यक् निदिध्यासितं साक्षात्कृतम् इति यावत् इति विशेषेण ज्ञानाभिमानिनाङ्कृते **अविज्ञातं** ब्रह्म न सम्यक् साक्षात्कृतम् इत्यर्थः। ब्रह्मणोऽपरिच्छिन्नत्वेन सम्यक् साक्षात्कारानर्हत्वात्। **अविजानताम्** -ब्रह्म मया न सम्यक् साक्षात्कृतम् इत्येवं ज्ञानवतां कृते तु ब्रह्म **विज्ञात**मेव सम्यक् साक्षात्कृतमेव; ब्रह्मणोऽपरिच्छिन्नत्वस्य तैः परिज्ञातत्वात्। एवं ब्रह्मगुणानामपि साकल्येन मनननिदिध्यासनागोचरत्वम् आकलनीयम्[6]; तेषामपि अनन्तत्वात्।

---

1 ततश्चाज्ञातत्वादिवचनम् - **क,ख,ग.**

2 सर्वात्मना ज्ञानागोचरत्वपरमिति - **क,ख,ग.**

3 **शास्त्राणाम्** - श्रुतिवाक्यानाम्।

4 असंगतार्थत्वप्रसंगात् - **क** असंगार्थत्वप्रसंगात् - **ख,ग.**

5 **वेदान्ताः** - उपनिषदः।

6 **आकलनीयम्** - ज्ञातव्यम्।

## सुबोधिनी

गुरुशिष्यसमाधितो विरम्य श्रुतिः स्वेन रूपेणाह - **यस्यामतम्** इति। **यस्यामतम्** - यस्य बुद्ध्या ब्रह्म साकल्येन **अमतम्,** यः साकल्येन ब्रह्मस्वरूपं न जानामीति मन्यत इति यावत्। **तस्य** ब्रह्म **मतम्** - तेन ज्ञातमिति यावत्। **यस्य मतम्** - यस्य बुद्ध्या साकल्येन मतम्, अशेषतो ब्रह्म जानामीति यो मन्यत इत्येतत्। **न वेद सः। विजानताम्** - विशेषतो जानताम्, ब्रह्माहं सम्यग्जानामि इति मन्यमानानाम्। **अविज्ञातम्** ब्रह्मस्वरूपम्। **अविजानताम्।** विजानद्भ्योऽन्ये अविजानन्तः; कार्त्स्न्येन न जानामीति मन्यमानानाम् इत्यर्थः। **विज्ञातम्** ब्रह्मस्वरूपम्। परोक्षापरोक्षज्ञानभेदेन अपौनरुक्त्यम्[1]।

यद्वा - **विजानताम्** - शास्त्रतो यथाऽवस्थितं ब्रह्मस्वरूपं ये जानन्ति, तेषां बुद्ध्या ब्रह्म अविज्ञातम्, ते ब्रह्मस्वरूपं कार्त्स्न्येन न जानीम इत्येव मन्यन्त इति भावः। **अविजानताम्** - यथावस्थितं ब्रह्म शास्त्रतो ये न जानन्ति, तेषां बुद्ध्या ब्रह्म विज्ञातम्, ते इदमेव ब्रह्म मयाऽवगतं सम्यक् इति मन्यन्त इति भावः।

सर्वात्मना वेद्यताऽत्र ब्रह्मणो न निषिद्ध्यते।
अत्रैव मतमित्युक्तं विरुद्ध्येत तथा सति।
सर्वथा तदवेद्यं चेत् तुच्छमेव भवेत्तदा।
प्रवृत्तिरपि शास्त्राणां नैव तस्मिन्घटेत च।

**प्रतिबोधविदितममृतममृतत्वं हि विन्दते।**
**आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ।४।**

## प्रतिपदार्थदीपिका

### अमृतत्वप्राप्तिप्रकारः

पुनश्च विशिनष्टि श्रुतिः - **प्रतिबोधविदितम्** इति। प्रतिनियतो बोधः-प्रतिबोधः, **'सत्यं ज्ञानमनन्तम्'** (तै.उ.आ. 1.1) इति प्रतिपदोक्तासाधारणधर्मविशिष्टत्वेन **विदितम्** - ज्ञातम् **अमृतम्** अमृतस्वरूपं ब्रह्म, कर्तृ; स्वोपासकस्य इति अध्याहार्यम्; **अमृतत्वम्** - अमृतस्व

---

1 **अपौनरुक्त्यम्** - प्रयोजनमंतरा उक्तस्यैव पुनरुच्चारणं पौनरुक्त्यम्। अत्र परोक्षापरोक्षार्थभेदात् पौनरुक्त्यमेव नास्ति।

रूपत्वं, **हि** इति प्रसिद्धौ **विन्दते** - लम्भयति प्रापयति; अन्तर्भावितणिजन्तः[1] अयं धातुः; लम्भनप्रकारमाह **आत्मना** - परमात्मना, **वीर्यं विन्दते** -ब्रह्मविद्योत्पत्त्यनुकूलं सामर्थ्यं लभते, **विद्यया** - ब्रह्मविद्यया, **अमृतम्** - मोक्षं, **विन्दते** - लभत इत्यर्थः।

## प्रकाशिका

### अमृतत्वप्राप्तिप्रकारः

**प्रतिबोधविदितममृतममृतत्वं हि विन्दते।** प्रतिनियतो बोधः **प्रतिबोधः।** सत्यत्व - ज्ञानत्व - अनन्तत्वादिरूपासाधारणधर्मविशिष्टतया ज्ञातम् **अमृतम्** - ब्रह्मस्वरूपं, तत्क्रतु-न्यायेन स्वोपासकस्याप्यमृतत्वं **विन्दते** - लम्भयति इत्यर्थः। अन्तर्भावितण्यर्थः अयं विदि-धातुः। लम्भनप्रकारमेवाह - **आत्मना विन्दते वीर्यं[2] विद्यया विन्दतेऽमृतम्। 'स नो देवः शुभया स्मृत्या[3] संयुनक्तु'** (तै.ना. 84.) इत्युक्तरीत्या विद्यानिष्पत्त्यनुकूलं वीर्यं प्रसन्नेन[4] परमात्मना लभते प्रसन्नपरमात्माऽऽहितवीर्यार्जितया विद्यया अमृतत्वम् अश्नुत इत्यर्थः।

## आनन्दभाष्यम्

### मोक्षसिद्धिप्रकारः

ननु ब्रह्मस्वरूपं यदि साकल्येन विदितं न स्यात्, तदा मोक्ष एव न सिद्ध्येत्, इति शङ्कमानं शिष्यं प्रति वदति गुरुः **प्रतिबोधविदितम्** इति।

अत्र मंत्रे 'श्रुतम्' इति शब्दोऽध्याहार्यः; मननिदिध्यासनबोधकशब्दसामर्थ्यात्। ततः येन पुंसा विधिवदभिगतगुरुमुखात् ब्रह्म श्रुतं सत्यत्व-ज्ञानत्व-अनन्तत्वादिभिः ब्रह्मेतराऽसा-धारणैः धर्मैः ब्रह्मविषयकश्रावणज्ञानं कृतम्, तदनन्तरं **मतम्** - उपपत्तियोजनया गुरु-सब्रह्मचारि[5] संवादेन, शङ्कादिव्यावृत्त्यै (ब्रह्म) मननात्मकज्ञानविषयीकृतम्; तदनन्तरं **प्रति-बोधविदितम् प्रतिबोधः** - निदिध्यासनम्, उपासना वा; तेन **विदितम्** - साक्षात्कृतं ब्रह्म,

---

1 **णिजन्तः** - ण्यर्थः।

2 **वीर्यमिति** - क.

3 **शुभया स्मृत्या** - शुभा स्मृतिरत्रविद्या।

4 **प्रसन्नेन** - अनुग्रहविशिष्टेन

5 **सब्रह्मचारी** - सहाध्यायी।

स पुमान् हि निश्चयेन **अमृतत्वम्** - मोक्षं **विन्दते** - प्राप्नोति। साकल्येन अज्ञानेऽपि श्रवण-मनननिदिध्यासनेन[1] ब्रह्मणः योग्यैकदेशसाक्षात्कारेऽपि मोक्षलाभो भवति; अतो हे शिष्य! न त्वया उद्विग्नेन[2] भाव्यम् इति गुरोराशयः।

**आत्मना** - धृत्या **वीर्यं** - मनोऽवधानरूपं विद्यानिष्पत्तिजनकं बलं **विन्दते** - लभते। तेन च निष्पन्नया **विद्यया** - उपासनारूपया भक्त्या **अमृतम्** - परमात्मस्वरूपं **विन्दते** - पश्यति - साक्षात्करोति इत्यर्थः।

धृत्या मनःसमाधाय, विद्यानिष्पत्तिद्वारा ब्रह्मसाक्षात्कारो भवति। ततश्च मोक्षसिद्धिर्भवति इति क्रमोऽत्र शिष्यमनःसमाधानाय प्रदर्शितः कृपालुना आचार्येण।

यद्वा बुध्यते इति बोधः - वेद्यं वस्तु। बोधे बोधे इति प्रतिबोधम्; प्रतिबोधं विदितम् इति प्रतिबोधविदितम्। यद्यत् वेद्यं वस्तु तत्र तत्र अन्तर्यामितया वर्तमानं ब्रह्मास्ति इति येन विदि-तम्, तेन ब्रह्म सम्यगवधारितम्; सः पुमान् अमृतत्त्वं विन्दते - मोक्षं लभते इत्यर्थः कार्यः। अग्रिममंत्रोत्तरार्धेन उपोद्बलितश्च[3] अयमर्थ इति बोध्यम्।

## सुबोधिनी

### प्रकारांतरेण ब्रह्मस्वरूपज्ञानम्

ब्रह्मणः साकल्येन अवेद्यत्वे तद्वेदनं कथम्? कथं वा मोक्षसिद्धिः? तत्राह - **प्रतिबोध** इति। यद्यपि ब्रह्म साकल्येन न ज्ञातुं योग्यम्; तथापि प्रतिबोधतो विदितं चेन्मतं भवति। बुध्यते अनेनेति बोधः-बोधकधर्मः, प्रतिनियतो बोधः **प्रतिबोधः** - असाधारणधर्मः, स च सत्यत्व-ज्ञानत्व-अनन्तत्वादिः; तैः असाधारणाकारैः स्वेतरनिखिलविलक्षणत्वेन विदितं चेत्तदा तद्ब्रह्मस्वरूपम् **मतमेव** - ज्ञातमेव। **अमृतत्वं विन्दते** - मोक्षं प्राप्नोति। येन प्रतिबोधवि-दितं तेन मतम्; सोऽमृतत्वं विन्दत इत्यन्वयः।

### अमृतत्वप्राप्तिप्रकारः

अमृतत्वप्राप्तिप्रकारमाह - **आत्मना** इति। **आत्मना** - प्रसन्नेन परमात्मना, **वीर्यम्** - विद्यानिष्पत्त्यनुकूलं मनोऽवधानरूपं[4] वीर्यं विन्दते। यद्वा - **आत्मना** - मनसा इत्यर्थः।

---

1 **श्रवणमनननिदिध्यासनेन** - श्रवणमननाभ्यां सम्पन्नेन निदिध्यासनेन।

2 **उद्विग्नेन** - विषण्णेन।

3 **उपोद्बलितः** - उपपादितः; पोषितः।

4 **मनोऽवधानरूपम्** -अवहितमनस्कत्वम्।

मनःकृतं वीर्यम्, प्रणिधानसामर्थ्यम्[1] इति यावत्। ततश्च निष्पन्नया विद्ययाऽमृतत्वमश्नुते।

यद्वा-बोधः बुध्यमानं वस्तु; कर्मणि घञ्, बोधे बोधे प्रतिबोधम्, प्रतिबोधं विदितं **प्रतिबोधविदितम्** - प्रतिवेद्यं येन ब्रह्मस्वरूपं विदितम् इत्यर्थः। सर्वशरीरत्वात् ब्रह्मणः प्रतिवेद्यम् **'ज्योतींषि विष्णुर्भुवनानि विष्णुः'** (वि.पु.2-12-38) इति न्यायेन[2] येन विदितं तेन ब्रह्म मतम् इति भावः।

**इह चेदवेदीदथ सत्यमस्ति**
**न चेदिहावेदीन्महती विनष्टिः।**
**भूतेषु भूतेषु विचित्य धीराः**
**प्रेत्यास्माल्लोकादमृता भवन्ति ।५।**

## प्रतिपदार्थदीपिका

### ब्रह्मविज्ञानं मोक्षसाधनम्

एतादृशब्रह्मविज्ञाने त्वरा कर्तव्या इत्याह - **इह चेदवेदीत्** इति। **इह** - अस्मिन्जन्मनि; ब्रह्म, **अवेदीच्चेत्** - ज्ञातवाँश्चेत् **अथ** एतज्जन्मानन्तरमेव **अस्ति** - सम्भवति; ब्रह्मलोकस्थितिः सम्भवति, **सत्यम्। इह** - अस्मिन्जन्मनि **नावेदीच्चेत्** - ब्रह्म न ज्ञातवाँश्चेत् **महती विनष्टिः** - महान् आत्मविनाशो[3] भवति। **अथ, धीराः** - विद्वांसः **भूतेषु भूतेषु** - सर्वभूतेषु विद्यमानं परमात्मानं **विचिन्त्य**[4] - स्वेतरसमस्तवस्तुविलक्षणम् इति विचिन्त्य - ध्यात्वा, **अस्माल्लोकात्** - एतल्लोकात् **प्रेत्य** अर्चिरादिमार्गेण परमात्मानं प्रेत्य - प्राप्य इत्यर्थः। **अमृताः भवन्ति** -मुक्ता भवन्ति इत्यर्थः।

## प्रकाशिका

### ब्रह्मणः इहैव अवश्यवेद्यत्वम्

तादृशब्रह्मज्ञाने त्वराम् उत्पादयति - **'इह चेदवेदीदथ सत्यमस्ति; न चेदिहावेदीत्,**

---

1 **प्रणिधानसामर्थ्यम्** - चित्तैकाग्र्यसामर्थ्यम्।

2 **ज्योतींषि विष्णुर्भुवनानि विष्णुः इति न्यायेन** - ज्योतिर्भुवनादीनां ब्रह्मशरीरत्वबोधकवचनोक्तरीत्या।

3 **महानात्मविनाशः** - ब्रह्मज्ञानसदसद्भावाभ्यां आत्मसत्ताम् आत्मनाशञ्च श्रुतिः अन्यत्र वदति।

4 प्रतिपदार्थकारैः **विचिन्त्य** इति पाठः आदृतः।

**महती विनष्टिः'**। इहैव जन्मनि, ब्रह्म ज्ञातवांश्चेत्, **अथ** - समनन्तरमेव **अस्ति** - सन् भवति। सत्य (अत्र) ज्ञानाभावे आत्मनोऽसत्ता भवति; **'असन्नेव स भवति असत् ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः'** (तै.आ.6) इति श्रुत्यनुरोधात् इति द्रष्टव्यम्। **'भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति'**। **भूतेषु भूतेषु** - सर्वभूतस्थं परमात्मानं प्रज्ञाशालिनः[1] स्वेतरसमस्तविलक्षणत्वेन निर्धार्य, **अस्माल्लोकात्** - अर्चिरादिमार्गेण परमात्मानं प्राप्य मुक्ता भवन्ति इत्यर्थः।

## आनन्दभाष्यम्

ननु एवमुक्ता परमात्मस्वरूपसाक्षात्कारिणी विद्या कदा सम्पादनीया इत्यत्र गुरुराह - **इह चेदवेदीदथ** इति।

### विद्यायाः अद्यैव संपाद्यत्वम्

इह जन्मनि शास्त्राधिकारवति ब्राह्मणादिशरीरे सति यदि **अवेदीत्** - ज्ञातवान्; ब्रह्मेति शेषः, चेत्, अथ तदा **सत्यम्** - अविनश्वरं ब्रह्मविद्याफलस्वरूपम् **अस्ति** - वर्तते, ब्रह्मप्राप्तिः निश्चित इति भावः। **इह** - ब्राह्मणादिजन्मनि **न अवेदीत्** - ब्रह्मज्ञानवान् नाभूत् चेत्, तदा **महती विनष्टिः** - महाननर्थः; संसाराकूपार[2]चंक्रमणस्वरूपः भवेत्। अतः ब्राह्मणादिशरीरे विद्याप्राप्तियोग्ये प्राप्ते सति, सद्य एव ब्रह्मविज्ञानाय यतनीयम्, विलम्बो न कार्य इति भावः। पूर्व मंत्रोक्तप्रतिबोधशब्दार्थं दर्शयति - **भूतेषु भूतेषु** - सर्वभूतेषु प्रतिबोधम्[3] इत्यर्थः, स्थितं ब्रह्म **विचिन्त्य** तेभ्यो विलक्षणत्वेन अवधार्य[4] आमरणं स्मारं स्मारं[5] **धीराः** -बुद्धिमन्तः, बुद्धिस्तु अत्र वेदने ब्रह्मप्राप्तिः अवेदने महाऽनर्थः इति विवेकरूपा; तेन ईदृशविवेकवन्तः जनाः, **अस्मात् लोकात्** - शरीरात् **प्रेत्य** - शताधिकया मूर्धन्यनाड्या निर्गत्य **अमृता** - मुक्ता **भवन्ति** - देशविशेषविशिष्टं[6] परमपुरुषं प्राप्ता भवन्ति इति यावत्।

---

1 **प्रज्ञाशालिनः** - उपासकाः।

2 **आकूपारः** - सागरः।

3 **प्रतिबोधम्** - पूर्वमंत्रे बोधशब्दः वेद्यवस्तुपरतया व्याख्यात इति स्मर्तव्यम्।

4 **अवधार्य** - निश्चित्य।

5 **स्मारं स्मारम्** - पुनः पुनः स्मृत्वा इत्यर्थः।

6 **देशविशेषविशिष्टम्** - अप्राकृते श्रीवैकुण्ठलोके स्थितम्।

## सुबोधिनी

### अस्मिन् जन्मनि ब्रह्मज्ञाने फलम्

**इह** - प्राप्ते शास्त्राधिकारयोग्येऽस्मिन्नेव जन्मनि, **अवेदीच्चेत्, अथ** - अनुपदम्, **सत्यमस्ति** - अनश्वरं फलमस्ति। **नावेदीच्चेन्महती विनष्टिः** - महान् अनर्थः, संसारनिरयपात एव। धिया रमन्त इति **धीराः** - आत्मतत्त्ववेदनशीलाः। **भूतेषु भूतेषु** - प्रतिभूतमन्तर्यामितया स्थितम्, **विचिन्त्य** - तेभ्यो विलक्षणत्वेन अवधार्य **अस्माल्लोकात् प्रेत्य** - निर्गत्य, निःशेषं विनष्टपापाः प्राकृतम् इमं लोकं समतिक्रम्य, देशविशेषं प्राप्य **अमृता भवन्ति** मुक्ता भवन्ति।

**द्वितीयखण्डः समाप्तः**

*****

**तृतीयखण्डः**

**ब्रह्म ह देवेभ्यो विजिग्ये। तस्य ह ब्रह्मणो विजये**
**देवा अमहीयन्त। त ऐक्षन्त, अस्माकमेवायं**
**विजयोऽस्माकमेवायं महिमेति ।१।**

## प्रतिपदार्थदीपिका

### देवानाम् अहंकारप्रदर्शनम्

'आत्मना विन्दते वीर्यम्' इत्युक्तार्थबोधकाख्यायिकामाह - **'ब्रह्म ह'** इति। **ह** इति प्रसिद्धौ। **ब्रह्म** - परं ब्रह्म, कर्तृपदम्। **देवेभ्यः**[1] - इन्द्रादिदेवेभ्यः, चतुर्थी; देवानामनुग्रहार्थम् इत्यर्थः। प्रसिद्धदेवासुरयुद्धसमये मर्यादासेतुविदारकासुरान्, **विजिग्ये** - जितवान्। **तस्य** - अपरिमितशक्तिविशिष्टस्य, **ब्रह्मणः** - परब्रह्मणः, **विजये** सति **देवाः** - अग्नीन्द्रादिदेवाः, **अमहीयन्त** - पूजिता अभवन्। **ते** - लब्धजयत्वात् स्वशक्त्यनभिज्ञाः, **देवाः** - अग्नीन्द्रादिदेवाः, **अयं विजयः** - परब्रह्मकर्तृकविजयः[2] **अस्माकमेव** - अस्मदीय एव[3] इति

---

1 **देवेभ्यः** - चतुर्थ्याः उद्देश्यत्वमर्थः तच्चानुग्रहरूपम्।

2 **परब्रह्मकर्तृकविजयः** - परब्रह्मकर्तृकत्वोक्तिः विजये, वास्तवदृष्ट्या।

3 **अस्मदीय एव** - अस्माभिः साधितः।

**ऐक्षन्त** - पश्यन्ति[1] , अमन्यन्त इत्यर्थः । **अयम्** - सर्वजेतृत्वरूपः, **महिमा च** - सामर्थ्यं च **अस्माकमेव** - अस्मदीय एव, इत्यमन्यन्त इत्यर्थः ।

## प्रकाशिका

### सुरविजय आख्यायिका

**आत्मना विन्दते वीर्यम्** - इत्युक्तार्थे आख्यायिकामाह -'**ब्रह्म ह देवेभ्यो विजिग्ये**' । परमात्मा देवानामनुग्रहार्थमसुरादीन्, शत्रून् विजितवान् । '**तस्य ह ब्रह्मणो**[1] **विजये देवा अमहीयन्त**' । ब्रह्मकर्तृकविजये सति देवाः पूजिता अभवन् । '**त ऐक्षन्त अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति**' । देवाः, अयमसुरविजयोऽस्मत्कर्तृक एव, तदनुकूलसामर्थ्यादिकमपि अस्मदीयमेव इत्यमन्यन्त ।

## आनन्दभाष्यम्

### परमेश्वराहितशक्तिकं सर्वम् स्वकार्यसमर्थम्

न केवलं मनःप्राणप्रभृतीनां परमात्मप्रेरितानामेव स्वस्वकार्यकरणसामर्थ्यम्; अपि तु देवादीनां सामर्थ्यवत्तया प्रसिद्धानां चेतनानामपि परमेश्वराहितशक्तीनामेव स्वस्वकार्यविशेषकर्तृत्वम्; नान्यथेति आख्यायिकामुखेन प्रदर्शयति गुरुः - **[ब्रह्म ह देवेभ्यः** इति] ।

**ब्रह्म** - सकलचिदचिदन्तर्नियमनकर्तृ, परमपुरुष इति यावत् । पुरा देवासुरसंग्रामे **देवेभ्यः** - देवानां कृते, देवेष्वाविश्य तत्करणबलाधानेन **विजिग्ये** - असुरान् विजितवत् । '**ह**' शब्दो निश्चये; एतन्निश्चितम् इत्यर्थः । अथ विजयानन्तरम् **तस्य** - देवेष्वाविष्टस्य **ब्रह्मणो विजये** - ब्रह्मकर्तृके असुरविजये सत्यपि, तदजानन्तः **देवा अमहीयन्त** -स्वमहत्वममन्यन्त 'अहंकारवन्तोऽभवन्' इति भावः । '**ह**' शब्दोऽत्राश्चर्ये[3] । ब्रह्मनिमित्तकविजयेऽपि, एते अहंकारिण इति आश्चर्यमेतत् इति भावः ।

**ते** - देवाः अहंकारवशात् **ऐक्षन्त** - ईक्षणं कृतवन्तः । ईक्षणप्रकारमेवाह - **अयम्** - प्रत्यक्षविषयो **विजयः** - असुरपराभवलक्षणः; **अस्माकम्** - इन्द्रादीनामेव; नत्वन्यस्य

---

1 **पश्यन्ति** - पश्यन्ति इति स्थाने अपश्यन् इत्येतत् साधु ।

2 **ब्रह्मणः** - कर्तरि षष्ठी ।

कस्यचित्, **अयं महिमा** - सर्वजन्तुकृतस्तुतिपूजादिरूपं महत्त्वम् **अस्माकमेव** - इन्द्रादीनां, न अपरस्य इति व्यजानन्।

## सुबोधिनी

इन्द्रियाणां कार्यकरणशक्तिकत्वे आख्यायिका

एवं प्रथमद्वितीयखण्डाभ्यां प्रश्न-प्रतिवचनमुखेन करणाधिपाधिपस्वरूपमुक्त्वा, तृतीय-खण्डे एतदाहितकरणशक्तिकानामेव तत्तत्कार्यविशेषकर्तृत्वसामर्थ्यम् आख्यायिकामुखेनाह - **ब्रह्मेति । ब्रह्म** पुरा देवासुरसंग्रामे, **देवेभ्यः** - देवानां निमित्ते, **विजिग्ये** - विजयमकरोत्। देवानामन्तर्यामितया स्थितं ब्रह्म, तेषां करणबलापादनेन विजयं तेभ्यः प्रायच्छत् इति भावः। तदानीं **ते देवा अमहीयन्त** - पूजिता अभवन्। अथ अहंभावेन **अस्माकमेवायं विजयः, अस्माकमेवायं महिमा, इति ऐक्षन्त** - अमन्यन्त।

**तद्धैषां विजज्ञौ। तेभ्यो ह प्रादुर्बभूव। तन्न व्यजानत(न्त) किमिदं यक्षमिति ।२।**

## प्रतिपदार्थदीपिका

देवानाम् अनुग्रहः

**तद्धैषाम्** इति। **तत् ह एषाम्** इति पदच्छेदः। **तत्** - परं ब्रह्म, कर्तृ; **एषाम्** - देहाभि-मानिदेवानाम्, **तत्** - पूर्वोक्ताज्ञानं **विजज्ञौ ह** - ज्ञातवत् किल, **तेभ्यः** - देवेभ्यः, भगवन्महि-मानभिज्ञदेवानुग्रहार्थम् इत्यर्थः; **प्रादुर्बभूव ह** - परमात्मा यक्षरूपेण प्रादुर्बभूव किल! ह इति किलार्थकः। **तत्** - यक्षरूपम् **न व्यजानन्त** - परं ब्रह्म इति न व्यजानन्त - देवा न ज्ञातवन्त इत्यर्थः। **यक्षम्** - पूज्यम्, **इदम्** - ईदृशं वस्तु **किम्** - किमिति अमन्यन्त[1] इत्यर्थः।

## प्रकाशिका

यक्षावतारः

**'तद्धैषां विजज्ञौ'।** तादृशं तेषाम् अभिमानं परमात्मा ज्ञातवान् इत्यर्थः। **'तेभ्यो ह प्रादुर्बभूव'**-तेषां देवानाम् अनुग्रहार्थं तत् ब्रह्म यक्षरूपं प्रादुर्भूतम्। **तन्न**

---

1 **किमिति अमन्यन्त** - जिज्ञासां प्राप्तवन्तः।

**व्यजानत किमिदं यक्षमिति** - एतत् यक्षस्वरूपं किमिति ते देवा **न व्यजानत** - न ज्ञातवन्त इत्यर्थः[1] ।

## आनन्दभाष्यम्

### यक्षाविर्भावः

ब्रह्म सर्वज्ञः परमपुरुषः **एषाम्** - देवानां स्वनिमित्तकविजयाभिमानवताम् **तत्** - अहङ्कारपूर्वकमीक्षणम् 'अस्माकमेवायं विजयः' इत्यादिरूपम् **विजज्ञौ** - अजानात् । अनन्तरं ब्रह्म **तेभ्यः** - देवेभ्यः, देवानां कृते, देवान् स्वात्मबोधदानेनानुग्रहीतुं, **प्रादुर्बभूव** - यक्षस्वरूपेण प्रकटमभूत् । **'ह'** इति निश्चये । **तत्** - यक्षस्वरूपेण आविर्भूतं ब्रह्म **किमिदं यक्षमिति** देवा **न व्यजानन्त** - न ज्ञातवन्तः । अभिमानादिदोषदूषितान्तःकरणतया देवा यक्षरूपेणाविर्भूतमपि ब्रह्म, ब्रह्मत्वेन निश्चेतुं नाशक्नुवन् इति भावः ।

## सुबोधिनी

### यक्षाविर्भावः

ब्रह्म इत्यनुषङ्गः । **एषाम्** - देवानाम् **तत्** - उक्तम् अभिमानम् ब्रह्म **विजज्ञौ** । **तेभ्यः** अहङ्कारापनोदनेनताननुग्रहीतुं, **प्रादुर्बभूव** - यक्षरूपमाविर्बभूव । **यक्षं तत्** - यक्षरूपम् आविर्भूतं ब्रह्म, **किमिदम्? इति न व्यजानन्त ।**

**तेऽग्निमब्रुवन्, जातवेदः! एतद्विजानीहि**
**किमेतद्यक्षमिति! तथेति । तदभ्यद्रवत् ।**
**तमभ्यवदत् कोऽसीति । अग्निर्वा अहमस्मीत्य-**
**ब्रवीत्, जातवेदा वा अहमस्मीति ।३,४ ।**

## प्रतिपदार्थदीपिका

### अग्नेः यक्षसमीपगंमनम्

**तेऽग्निम्** इति । **ते** - भगवन्महिमानभिज्ञाः देवाः, **अग्निम्** अखिलवस्तुदहनसमर्थं जातवेदसम् **अब्रुवन्** - उक्तवन्तः । **हे जातवेदः एतत्** - अस्मच्चक्षुर्गोचरम्, **यक्षं विजानीहि** -

---

1 न ज्ञातवन्तः - **ख. ग.**

विशेषतो बुध्यस्व। **किमेतद्यक्षमिति** उक्तवन्तः। **तथेति। तत्** - यक्षम् **अभ्यद्रवत्** - तत्प्रतिगतवान् अग्निः। **तम्** - अग्निं, यक्षम्[1] **अभ्यवदत् कोऽसीति** - कस्त्वमिति अब्रवीत्। **अग्निर्वा अहमस्मि** - सर्ववस्तुदहनसमर्थोऽहम् अस्मि' इति **जातवेदा अहमस्मि इति** - जातम् उत्पन्नं वेत्ति इति व्युत्पत्त्या, सर्वज्ञोऽहमिति; **'विद-ज्ञाने'** (धा.पा.1064) अग्निः अवदत् स्वसामर्थ्यमुक्तवान् इत्यर्थः।

## प्रकाशिका

### अग्नेः ब्रह्मणा समागमः

**'तेऽग्निमब्रुवन्.........किमेतद्यक्षमिति'**। जातवेदः एतद्विजानीहि किमेतद्यक्षमितीत्युक्तवन्तः। **'तथेति। तदभ्यद्रवत्............. जातवेदा वा अहमस्मीति'**। **तथेति** स यक्षसमीपं गतः तेन **कोऽसीति** पृष्टः, **अग्निः, जातवेदाः** इति प्रसिद्धं नामद्वयमुक्तवान्[2] इत्यर्थः।

## आनन्दभाष्यम्

### अग्नि-यक्षसंवादः अग्नेः पराभवश्च

**ते** - एवं यक्षरूपं ब्रह्म अजानन्तो देवाः **अग्निम्**- अग्रगमनकर्तारं सर्वतस्तेजस्विनं देवम् अग्निनामानम् **अब्रुवन्** -उक्तवन्तः। **हे जातवेदः** - अग्ने **एतत्** - अस्माभिः सर्वैः दृश्यमानं **विजानीहि** - विशेषतोऽवगच्छ; **एतत्** -इदं पुरःस्थितं **यक्षं किम्?** - देवादिषु कतमत् इति; देवादिषु मध्ये एतत् दृश्यमानं यक्षात्मकं किमिति विशेषरूपेण निश्चिनु। एवं देवैः उक्तोऽग्निः उवाच **तथेति;** यत् भवद्भिरादिश्यते, तत् करिष्यामि इति स्वीकृतवान् इत्यर्थः।

स्वीकृतदेववचनोऽग्निः **तत्** - यक्षस्वरूपेणावस्थितं ब्रह्म **अभि** - आभिमुख्येन **अद्रवत्** (ब्रह्म) समीपं गतवान्। **'द्रु गतौ'** (धा.पा.945) धातुः। अभिमुखमागतं जिज्ञासावन्तं वह्निदेवं **तत्** ब्रह्म **अभ्यवदत्** - पप्रच्छ **कोऽसि** - मत्समीपमागतः त्वं को भवसि? इत्यर्थः। एवं पृष्टः अग्निः **अब्रवीत्** - उक्तवान्। **अग्निः** अग्निनामा **वै** - प्रसिद्धोऽहं सर्वेषामस्मि, **जातवेदाः** - जातवेदोनाम्ना **वै** - प्रसिद्धः **अहमस्मि** - सर्वेषाम्, इत्युक्तवान् इत्यर्थः।

---

1 **यक्षम्** - कर्तृ।

2 स्वस्य प्रसिद्धं नामद्वयम् - **ख,ग.**

## सुबोधिनी

### अग्नि-यक्षसंवादः

एवम् अजानन्तः ते तद्विज्ञानाय अग्निमब्रुवन्, **जातवेदः! एतद्विजानीहि किमेतद्यक्षम् इति।** एवमुक्तोऽग्निः **तथेति** उक्त्वा तत् ब्रह्माभिमुखीकृत्य **अद्रवत्** - बलदर्पतः अद्य ज्ञात्वाऽऽगमिष्यामि इति वेगेन अगच्छत्। **तम्** - अग्निं, यक्षस्वरूपम् **अवदत्कोऽसि? इति।** एवं पृष्टोऽग्निः वीर्याभिमानेन असकृत् नाम्नाऽऽत्मानं प्रख्यापयन् अब्रवीत् - **अग्निर्वा अहमस्मि जातवेदा वा अहमस्मीति।**

**तस्मिंस्त्वयि किं वीर्यमिति। अपीदं सर्वं**
**दहेयम्, यदिदं पृथिव्यामिति। तस्मै तृणं निदधौ,**
**एतद्दहेति। तदुपप्रेयाय सर्वजवेन। तन्न शशाक**
**दग्धुम्। स तत एव निववृते, नैत (नैन) दशकं**
**विज्ञातुम्, यदेतद्यक्षमिति। ।५,६।**

## प्रतिपदार्थदीपिका

### यक्षाग्निसंवादः अग्नेः पराजयः

पूर्वोक्तं शब्दगर्भितमर्थं वाचापि वदत्यग्निः तस्मिन् इत्यादिना। **तस्मिन्** - पूर्वोक्ते त्वयि, **किं वीर्यमिति** - किं सामर्थ्यम्? इति पृष्टः, सोऽब्रवीत्। **पृथिव्याम्**[1] - भूम्यन्तरिक्षादिषु, **यत्** - पदार्थजातं वर्तते, **तत्सर्वं दहेयमिति** - भस्मीकुर्याम् इत्यवदत्, तर्हि एतत्तृणं भस्मीकुरु इत्यवदत् **तस्मै** इति। **तस्मै** - अग्नये **तृणं निदधौ** - तृणमग्रे निक्षिप्तं ब्रह्मणा, **एतद्दहेति** च उक्तम् - एतद्भस्मीकुर्विति च उक्तम्। सोऽग्निः **सर्वजवेन तदुपप्रेयाय** - गतवान्, **तत्** - तृणं **दग्धुं न शशाक** - न समर्थः (अभवत्) इत्यर्थः। **स तत एव** इत्यादि। **सः** - अग्निः, **तत एव** - तृणमात्रदहनासामर्थ्यादिव **निववृते** - व्रीडितो निवृत्तः, **यत्** - पुरोवर्ति **यक्षमेतत्** एतादृशम् इति सामान्यतो वा **विज्ञातुम्, एतत्** - एतादृशमिति विशेषेण ज्ञातुं वा **अहं नाशकम्** - असमर्थ इत्यग्निः अवदत् देवान् प्रति।

---

1 **पृथिव्याम्** इत्युपलक्षणम् अन्तरिक्षादेरपि इति भावः।

## प्रकाशिका

### तृणदहनासामर्थ्यम् अग्नेः

**'तस्मिंस्त्वयि किं वीर्यमिति । अपीदं सर्वं दहेयं यदिदं पृथिव्यामिति'** । तव क्व सामर्थ्यमस्तीति यक्षेण पृष्टोऽग्निः पृथिव्यन्तर्वर्तिसकलदाहसामर्थ्यम् अस्तीति उक्तवान् ।

**'तस्मै..........स तत एव निववृते'** । तर्हीदं तृणं दहेति यक्षेण उक्तः, सर्वेण जवेन[1] तत्समीपं गतः, दग्धुमसमर्थो निवृत्त इत्यर्थः । **उपप्रेयाय** - समीपं गत इत्यर्थः । **'नैतदशकं विज्ञातुं यदेतद् यक्षमिति'** । एवं देवान् प्रति उक्तवानिति शेषः । एवमुत्तरत्रापि ।

## आनन्दभाष्यम्

### अग्नेः गर्वभङ्गः

एवमुक्तवन्तं वह्निं ब्रह्म पुनः पृच्छति - **तस्मिन्** - अग्नि-जातवेद इति नामद्वयेन प्रसिद्धे **त्वयि किं वीर्यम्** - सामर्थ्यमस्ति? इति ब्रह्म पप्रच्छ, तथा पृष्टोऽग्निः **पृथिव्यां यदिदं** दृश्यमानं वस्तुजातं **सर्वं दहेयम्** - भस्मीकुर्याम् इति अवदत् । अत्र पृथिवीपदं लोकान्तरस्याप्युपलक्षणम्, तेन ब्रह्माण्डान्तर्वर्ति मूर्तं सर्वं स्थावरजङ्गमात्मकं वस्तु दग्धुं मे सामर्थ्यमस्तीति गर्वात्मकमुत्तरं दत्तवान् इति भावः ।

**तस्मै** - एवं सर्वदहनसामर्थ्यं प्रख्यापितवते अग्नये, तत् यक्षरूपं ब्रह्म **तृणं निदधौ** - किमपि शुष्कमेकं तृणं तृणस्वरूपमत्यल्पं दाह्यं वस्तु, तस्य पुरतः स्थापितवत् । ततश्चाग्निं जगाद; **एतत् तृणं दह** - भस्मीकुरु इति । एवं यक्षेण उक्तोऽग्निः **तत्** - पुरःस्थितं तृणं **उपप्रेयाय** - **उप** -समीपं प्रकर्षेण गतवान् । गत्वा च **सर्वजवेन** - स्वीयेन सर्वप्रकारेण वेगेन, **तत्** - पुरःस्थितं तृणं **दग्धुं न शशाक** - व्यापृतोऽपि भस्मीकर्तुं न प्राभवत् । **स** तृणं दग्धुमसमर्थोभवन् वह्निः, **ततः** - तस्मात् तृणादहनादेवहेतोः 'अस्मदपेक्षयाऽपि बलीयः किमप्येतत् यक्षरूपम्' इत्यवधार्य गताभिमानः शीघ्रमेव **निववृते** - तस्मात् यक्षसमीपदेशात् निवृत्तवान् । देवसमीपं गत्वा च देवानुवाच **एतत् यक्षं किमिति विज्ञातुम्** - विशेषेण निश्चेतुम्, अहं **नाशकम्** - न समर्थोऽभवम् इति ।

---

1 सर्वजवेन - **क,ख,ग.**

## सुबोधिनी

अग्नेः पराभवः

एवं प्रत्युक्तं यक्षस्वरूपम् आह - **तस्मिन् इति ।** अग्निरहं जातवेदा वाऽहमिति बहुनामभिः प्रख्यापितात्मवैभवे **त्वयि किं वीर्यम्?** इति! एवं पृष्टोऽग्निः साभिमानमाह - **यदिदं पृथिव्यां सर्वमपीदं दहेयमिति । तस्मै तृणं निदधौ तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुम् ।** स्फुटमेतत् । **सः** - भग्नमानः अग्निः **एतद्यक्षं यत्** - यत्स्वरूपं, **एतत् विज्ञातुम्** सम्यक् ज्ञातुम्, **नाशकम्;** इति मत्वेति शेषः **तत एव** -तत्क्षणादेव, **निववृते** - गतमानो गतवेगः, क्षणमप्यसन्निधाय अपससार इति भावः ।

**अथ वायुमब्रुवन्, वायवेतद्विजानीहि**
**किमेतद्यक्षमिति! तथेति ।७।**

**तदभ्यद्रवत् । तमभ्यवदत्, कोऽसीति? वायुर्वा**
**अहमस्मीत्यब्रवीत्, मातरिश्वा वा अहमस्मीति ।८।**

**तस्मिंस्त्वयि किं वीर्यमिति । अपीदं सर्वमाददीयं,**
**यदिदं पृथिव्यामिति ।९।**

**तस्मै तृणं निदधौ एतदादत्स्वेति । तदुपप्रेयाय**
**सर्वजवेन । तन्न शशाकाऽऽदातुम् । स तत एव**
**निववृते, नैत (नैन) दशकं विज्ञातुं,**
**यदेतद्यक्षमिति ।१०।**

## प्रतिपदार्थदीपिका

वायोः यक्षसमीपगमनम्; संवादः, वायोः पराजयश्च

**वायुमब्रुवन्** - सर्वमादाय वाति गच्छति इति **वायुः** इति व्युत्पत्त्या, सर्वपदार्थानादातुं समर्थ इति । शेषं पूर्ववत् ज्ञेयम् ।

## प्रकाशिका

अत्र रङ्गरामानुजभाष्यम् नास्ति

## आनन्दभाष्यम्

वायुयक्षसंवादः, वायोः पराभवश्च

**अथ** - यक्षपार्श्वान्निवृत्तस्य अग्नेः वचःश्रवणानन्तरं देवाः, **वायुमब्रुवन्** - उक्तवन्तः, हे **वायो एतद्विजानीहि** - बुध्यस्व, **एतद्यक्षं किमिति।**

एवं देवैरुक्तो वायुः उवाच **तथेति** - भवद्भिः देवैः यदुक्तं तत्करिष्यामि इति प्रत्युक्तवान् इत्यर्थः।

सः वायुः **तत्** - यक्षम् **अभ्यद्रवत्** - (यक्ष) समीपं गतवान् **तम्** - समीपमागतं वायुं यक्षरूपं ब्रह्म **अभ्यवदत्** -साम्मुख्येन पप्रच्छ, **कोऽसि इति,** एवं पृष्टो वायुः उक्तवान्, **वायुर्वा अहमस्मीति,** नामतो वायुरहं सामान्येन प्रसिद्धोऽस्मि। **वै** प्रसिद्धौ, **मातरिश्वा वा अहमस्मि** इति। **मातरि** - आकाशे श्वयति-गच्छतीति **मातरिश्वा** विशेषेण आकाशादिप्रदे-शाधिकरणगतिशीलत्वात् 'मातरिश्वा' इति नाम्ना प्रसिद्धोऽहमस्मीति।

वायुना एवमुक्तं यक्षरूपं ब्रह्म पुनः अपृच्छत् वायुम्। एवं नामद्वयेन विख्यापितस्वप्रभावे **त्वयि किम्** - कीदृशं **वीर्यम्** - सामर्थ्यमस्ति? किं किं कार्यं कर्तुं त्वं समर्थोऽसि? इति भावः। एवं पृष्टो वायुः उक्तवान् **पृथिव्यामपीदम्** - दृश्यमानं यत्किञ्चित् स्थावरजङ्गमात्मकं वस्तु **तत्सर्वम् आददीय** - 'आदायान्तरिक्षे गमनं कुर्याम्, सर्वम् उड्डाययितुं समर्थोऽहमस्मि' इति स्वसामर्थ्यं प्रकटितवान्।

**तस्मै** - एवं सर्वादानसामर्थ्यं प्रकटितवते वायवे तदनुग्रहार्थं **तृणम्** तत्पुरतः **निदधौ** - स्थापितं कृतवत्। स्थापयित्वा च उवाच, **एतत्** - पुरो निहितं तृणम् **आदत्स्व** - एतस्मात् स्थानात् विचालय। एवमुक्तो वायुः **तत्** - तृणं **सर्वजवेन** - सर्वेण स्वगतेन वेगेन **उपप्रेयाय** प्रकर्षेण समीपं गतवान्, तृणं चालयितुं प्रायतत। परन्तु **तत्** - पुरःस्थितं तृणम्, **आदातुम्** विचालयितुं **न शशाक** - न समर्थोऽभूत्। **सः** - वायुः **ततः** - तृणानादानादेव गतगर्वः द्रुतं यक्षसमीपात् **निववृते** देवसमीपमागतवान्। आगत्य च देवानुवाच **यदेतत्** - पुरोगतं **यक्षम्** तत्किम्? इति विशेषतो ज्ञातुं नाऽहं समर्थोऽभूवम् इति।

## सुबोधिनी

### वायुयक्षसंवादः वायोः पराभवश्च

अथ वायुम् इत्यादि स्फुटम्।

**अथेन्द्रमब्रुवन्, मघवन्नेतद्विजानीहि**
**किमेतद्यक्षमिति। तथेति तदभ्यद्रवत्।**
**तस्मात् तिरोदधे। ११।**

**स तस्मिन्नेवाकाशे स्त्रियमाजगाम**
**बहुशोभमानामुमां हैमवतीम्। तां होवाच**
**किमेतद्यक्षमिति। १२।**

## प्रतिपदार्थदीपिका

### इन्द्रस्य यक्षसमीपगमनम्, यक्षतिरोधानम् लक्ष्म्या सह संवादः

**अथेन्द्रमब्रुवन्, मघवन्** इत्यारभ्य **तथेत्यभ्यद्रवत्** इत्यन्तं पूर्ववदर्थः। **'इदि-परमैश्वर्ये'** (धा.पा.63) इति धातोः परमैश्वर्यविशिष्टः **इन्द्रः इति;** तम् **अब्रुवन्।** मह्यते पूज्यत इतिं मघवा; सर्वलोकपूज्य इति। मघवन्! इति संबोधनम्। **'मह-पूजायाम्'** इति (धा.पा.730) धातुः। **तस्मात्** - एतादृशगर्वविशिष्टेन्द्रसकाशात्, यद्वा, इन्द्रः एतादृशगर्वविशिष्टः इति हेतोर्वा। **तद्ब्रह्म तिरोदधे** - अन्तर्धानं गतम्। अग्निवाय्वोरिव इन्द्रस्यापि गर्वभङ्गो माभूत् इति कृपया अन्तर्धानं गतमिति भावः। **सः** - इन्द्रः, **तस्मिन्नेवाकाशे** स्थितः, यस्मिन् यक्षरूपं ब्रह्म अस्ति, तस्मिन्नाकाश इत्यर्थः। यद्वा-तस्मिन्नेवाकाशे यक्षस्थिताकाशे; प्रादुर्भूताम् इति शेषः। **हैमवतीम्**[1] - हिरण्यविकारभूषणवतीम्; अत एव **बहुशोभमानां माम्** - लक्ष्मीरूपां पुरुषकारभूतां **स्त्रियम् उ** - **'तदु चन्द्रमा'** (तै.ना.7) इतिवत् स्थानप्रमाणात्[2] 'उकार' एवकारार्थकः। **'लक्ष्मीं पुरुषकारत्वे धृतवन्तो वरानन' (?)** इति। मम संशयनिवर्तकी इयमेवेति **आजगाम** - आगतवान् इत्यर्थः। जिज्ञास्यं पृच्छति **ताम्** इत्यादिना। **ताम्** - पुरुषकारत्वे प्रसिद्धां लक्ष्मीं नित्यानपायिनीम् **उवाच, ह** इति प्रसिद्धौ।

---

1 **हैमवती** - हेम्नः-हिरण्यस्य अयं-हिरण्यविकारः; हैमः अस्याः अस्तीति हैमवती।

2 **स्थानप्रमाणात्** - पाठसादेश्यरूपात्।

**किमेतद्यक्षमिति** - एतद्यक्षस्वरूपं **किम्** - कीदृशम्? इत्युवाच इति पूर्वेणान्वयः ।

## प्रकाशिका

### उमाविर्भावः इन्द्रस्य यक्षविषयक प्रश्नश्च

**तस्मात्तिरोदधे । तस्मात्** मघोनस्सन्निधेः, एतस्य गर्वभङ्गो मा भूदिति तिरोहितम् अभवत् इत्यर्थः । **'तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानाम् उमां[1] हैमवतीम्[2] । तां होवाच किमेतद्यक्षमिति ।** तस्मिन्नेव प्रदेशे हिमवत्पुत्रीं बहुभिराभरणैः शोभमानां पार्वतींसर्वज्ञामिन्द्रानुग्रहाय[3] प्रादुर्भूतां दृष्ट्वा तत्समीपमागत्य, इयं सर्वं जानाति इति मन्यमानः, किमेतत् यक्षमिति पप्रच्छ इत्यर्थः ।

## आनन्दभाष्यम्

### यक्षतिरोधानम्

**अथ** - विगतगर्वस्य यक्षदेशात् परावृत्तस्य वायोः यक्षाऽविज्ञानावबोधकवचनश्रवणानन्तरम्, देवाः **इन्द्रम्** - देवराजम् **अब्रुवन्** - उक्तवन्तः । **हे मघवन्** - इन्द्र, **एतत् विजानीहि किमेतद्यक्षमिति ।** पूर्ववद्व्याख्या कार्या । देवैः निवेदितो देवेन्द्रः **तथेति** - भवदुक्तं करिष्यामि इति उक्तवान् ।

एवमुक्त्वा महेन्द्रः **तत्** - यक्षम् **अभ्यद्रवत्** - (यक्ष) समीपं गतवान् । इन्द्रस्य आगमनानन्तरं **तस्मात्** - इन्द्रात् **तिरोदधे** - अन्तर्हितम् अभूत्; तद्यक्षरूपम् इति शेषः ।

यद्वा - **तस्मात्** - यस्मिन् प्रदेशे यक्षरूपं ब्रह्म पूर्वं दृश्यमानम् आसीत्, तस्मात् प्रदेशात् **तिरोदधे** - अन्तर्धानं चकार यक्षरूपम् इत्यर्थः । 'इन्द्रो हि देवराजः, नास्य मानभङ्गः वह्निवाय्वोरिव भवतु' इति विचार्यैव अन्तर्धानमाजगाम इति भावः ।

### यक्षविषयकजिज्ञासा

**सः** - इन्द्रः **तस्मिन्नेव** - पूर्वं यक्षाधिष्ठिते एव **आकाशे** - अवकाशप्रदेशे, यक्षरूपं क्व गतम्? इत्यादि विमृशन् विस्मितमनाः सन् तस्थौ इति शेषः । ततः कियति काले प्रादुर्भूता

---

1 **उमाम्** - 'उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम' इति कालिदासवचनम् अत्र स्मर्तव्यम् ।

2 **हैमवतीम्** - 'हिमवतोऽपत्यं स्त्री' इति व्युत्पत्तिः ।

3 पार्वतीमिन्द्रानुग्रहाय - **ग.**

स्त्री यक्षेण इन्द्रस्य अनुग्रहार्थं प्रेषिता। दृष्ट्वा च ताम् **स्त्रियम् आजगाम** - तत्समीपं गतवान् इन्द्रः यक्षस्य वृत्तं प्रष्टुकामः। आगत्य च **बहुशोभमानाम्** - अधिककान्तिमतीम्, **हैमवतीम्** - हिमवतो नगाधिराजस्य पुत्रीम्, **उमाम्** - उमाभिधानाम् **उवाच** - सविनयं पृष्टवान्। **ह** - निश्चये। **किमेतद्यक्षमिति** अत्र प्रदेशे पूर्वम् अस्माभिरपि दृश्यमानम्, इदानीं च अन्तर्भूतम् एतद्यक्षरूपं **किम्** - देवेषु कतमत्? इति।

## सुबोधिनी

### यक्षतिरोभावः

**अथेन्द्रमब्रुवन्** - **अथ** - सर्वे देवा देवराजमब्रुवन्। **मघवन्! किमेतद्यक्षम्? इति विजानीहि** इति। **तथेति** उक्त्वा **तदभ्यद्रवत्।** इन्द्रस्य मानभङ्गो मा भूदिति ब्रह्म स्वयं **तस्मात्** - इन्द्रात्, देशाद्वा; **तिरोदधे** - अन्तर्हितमभूत्।

### इन्द्रप्रार्थना

**सः** - इन्द्रः **तस्मिन्नेवाकाशे** - प्राग्यक्षाधिष्ठित एव प्रदेशे; आविर्भूताम् इति शेषः। **बहुशोभमानाम्** - हिमवत्पुत्रीम् **उमाम्, आजगाम** - दृष्ट्वा तत्सन्निधिमागच्छत् इति भावः। आगत्य **किमेतद्यक्षमिति** - सविनयं **ताम् उवाच** - अपृच्छत इति भावः।

**तृतीयखण्डःसमाप्तः**

*****

### चतुर्थखण्डः

**सा ब्रह्मेति होवाच, ब्रह्मणो वा एतद्विजये महीयध्वम् इति। ततो हैव विदाञ्चकार ब्रह्मेति ।१।**

## प्रतिपदार्थदीपिका

### लक्ष्म्या श्रियःपतेः यक्षरूपत्वकथनम्

किमेतत् इति प्रश्नार्थं वदति - **सा ब्रह्मेति। सा** - लक्ष्मीः यक्षं परं **ब्रह्मेति होवाच। 'ह'** इति किलार्थकः। **ब्रह्मणः** - परब्रह्मभूतभगवतः **एतद्विजये** - पूर्वोक्तासुरविजये **महीयध्वम्** - महिमानमेव प्राप्नुत; किन्तु 'विजयः अस्मदीयः' इति दुरभिमानो न कर्तव्यः इत्यर्थः।

**ततो हैवेति ।** पुरुषकार[1]भूतलक्ष्म्युपदेशादेव किलेत्यर्थः । **ब्रह्मेति** - 'परं ब्रह्म श्रियःपतिः' इति **विदाञ्चकार** - ज्ञातवान् इन्द्रः ।

## प्रकाशिका

### असुरविजयः परमात्माधीनः

'ब्रह्मेति होवाच, ब्रह्मणो वा एतद्विजये महीयध्वम्' इति । ब्रह्मैव यक्षरूपेण युष्मन्मोहशमनाय प्रादुर्भूतम् । अतो ब्रह्मसम्बन्धिनि विजये निमित्ते पूजां प्राप्नुत । अस्माभिरेव विजयः कृत इति दुरभिमानः त्यक्तव्यः इत्यर्थः । **'ततो हैव विदाञ्चकार ब्रह्मेति' ।** तदुपदेशादेव ब्रह्मेति ज्ञातवान् इत्यर्थः ।

## आनन्दभाष्यम्

### असुरविजयस्य परमात्माधीनत्वम्

**सा** - हैमवती उमादेवी **ब्रह्मेति उवाच** - यत् दृष्टं पूर्वं भवद्भिः यक्षरूपं तत् ब्रह्म स्वरूपतो गुणतश्च निरतिशयबृहत्त्वविशिष्टं ब्रह्मैव दृष्टम् इति **उवाच** - प्रोक्तवती । **ह** - निश्चयेन । हे इन्द्र यूयं देवाः **ब्रह्मणः** - निरतिशयबृहत्त्ववतः सर्वान्तर्यामिणः परमपुरुषस्य **वै** - निश्चयेन **विजये महीयध्वम्** - अस्मदनुप्रविष्टः ब्रह्मकृत एवायं विजय इति कृत्वा महीयध्वं महिमानं स्तुतिपूजादि लक्षणं प्राप्नुत; स्वकृतविजयनिमित्तं यत् पूर्वममहीयध्वं तदधुना त्यजत; स्वविजयनिमित्तं गर्वं मुञ्चतेति भावः । **ततः ह** - निश्चयेन **एव** - तस्मादुमावाक्यादेव **ब्रह्म विदाञ्चकार** - यदेतत् यक्षरूपमासीत्, तत् ब्रह्मैव यक्षरूपेण आविर्भूतम् आसीत् इति ज्ञातवान् । इन्द्र इति शेषः ।

## सुबोधिनी

### ब्रह्मकर्तृकः असुरविजयः

**सा** - उमा, इन्द्रेण पृष्टा सती **ब्रह्मेति** - एतद्यक्षस्वरूपमाविर्भूतं ब्रह्म इत्युवाच । एवमुक्त्वा इदमपि उवाच । **ब्रह्मणः एतद्विजये** - ब्रह्मकर्तृके अस्मिन्विजये यूयं **महीयध्वम्** - महिमानं प्राप्नुत । न अस्माकं विजयः; अपि तु अस्मदन्तर्यामिण एवाऽयम् इति

---

**1 पुरुषकारः** - इष्टार्थप्रदानानुगुणं प्रेरकत्वम् ।

महिमानं प्राप्नुत[1] ; अस्माकमेवायं विजयः इत्यभिमानं त्यजत, इति भावः। **ततो ह वै** - तदानीमेव, **ब्रह्मेति विदाञ्चकार।**

**तस्माद्वा एते देवा अतितरामिवान्यान् देवान्;**
**यदग्निर्वायुरिन्द्रः। ते ह्येनन्नेदिष्ठं पस्पृशुः।**
**ते (स) ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ।२।**

## प्रतिपदार्थदीपिका

देवतासु अग्निवाय्विन्द्राणाम् उत्कृष्टत्वप्रतिपादनम्

तस्माद्वा इति। वा शब्दः एवकारार्थकः। तस्मादेव हेतोः, परब्रह्मसमीपगमनतत्संवादादिसम्बन्धहेतोः। **एते देवाः** - अग्निवाय्विन्द्रादेवाः **अन्यान् देवान् अतितरामिव** - योग्यताभिः अतिक्रान्ता एव। **यत्** - यस्माद्धेतोः **ते** - पूर्वोक्ताः **अग्निर्वायुरिन्द्रः। एनन्नेदिष्ठम्। एनत्** - एतत्परंब्रह्मणो **नेदिष्ठम्** - समीपं **पस्पृशुः** - स्पृष्टवन्तः। **ते हि** - इन्द्रादयो हि **एतत्** - यक्षरूपम्, **प्रथमः** - आदौ **ब्रह्मेति विदाञ्चकार** - परं ब्रह्मेति विदुः।

## प्रकाशिका

अग्निवाय्विन्द्राणाम् अतिशायित्वम्

**तस्माद्वा एते देवा अतितरामिवान्यान् देवान्, यदग्निर्वायुरिन्द्रः। ते ह्येनन्नेदिष्ठं पस्पृशुः। ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति** - तस्मादेव हेतोः एत एवाग्निवाय्विन्द्राः इतरान् देवान् अतिशेरत इव। इव शब्दः एवार्थः। अतिशेरत एव इत्यर्थः। यस्माद्धेतोः **नेदिष्ठम्**[2] - समीपे वर्तमानं तत् ब्रह्म, **पस्पृशुः** - दृष्टवन्तः, यतश्च हेतोः **प्रथमो विदाञ्चकार** - प्रथमास्सन्तो ब्रह्मेति विदाञ्चक्रुः[3] ; अत एवैते देवतान्तरापेक्षया अग्निवाय्विन्द्राः अतिशयितवन्तः[4] इत्यर्थः।

---

1 **महिमानं प्राप्नुत** - माहात्म्यं परमात्मसम्बन्धितया जानीत।

2 **नेदिष्ठम्** - इदमनयोरतिशयेनान्तिकम्। 'अन्तिक' शब्दस्य इष्ठन् प्रत्यये परे 'नेद' इत्ययमादेशः। इष्ठनः अतिशायनम् अर्थः।

3 प्रथमं विदाञ्चक्रुरित्यर्थः - **ख,ग.**

4 **अतिशयितवन्तः** - अति पूर्वकात् शीङ् धातोः भावे 'क्त' प्रत्यये अतिशयितमिति रूपम्। अतिशयवन्तः - **क.** अतिशयार्थकम्।

वचनव्यत्ययः[1] छान्दसः[2] ।

## आनन्दभाष्यम्

### वरुणाद्यपेक्षया अग्न्यादीनाम् आधिक्यम्

**वै** इति निश्चये। **तस्माद्वै** - तस्मादेव, **एते** - अग्निवायुमहेन्द्राः यतो हेतोः अग्निः वायुश्च यक्षरूपेण ब्रह्मणा संवादं चक्रतुः, इन्द्रश्च उमावाक्यात् निश्चयं प्राप्तवान्, तस्मात् हेतोः अन्यान् वरुणकुबेरादीन् **देवान् अतितरामिव** अतिशयेन अतिक्रम्येव वर्तन्ते इति शेषः; वरुणादिदेवेभ्यः अग्निवायुमहेन्द्राः महिम्ना अधिका इत्यर्थः। **इव** इति निपातः एवार्थः, अनर्थो[3] वा अत्र बोध्यः। के ते देवाः? इत्यत्राह - **यदग्निर्वायुरिन्द्रः** यच्छब्दः प्रत्येकमन्वेति। यः अग्निः यो वायुः यः इन्द्रः इत्यर्थः। छान्दसः 'यत्' इत्यत्र लिङ्गव्यत्ययः। **ते** - अग्नीन्द्रवायवः **हि** निश्चयेन **एतत्** - यक्षरूपेणावस्थितं ब्रह्म **नेदिष्ठम्** - अतिशयसमीपं **पस्पृशुः** - तत्समीपं गता इत्यर्थः।

### अग्निवाय्विन्द्राणां ब्रह्मज्ञानविषये विवेकः

यद्वा - **पस्पृशुः** - परामर्शं कृतवन्तः; यद्वा **पस्पृशुः** स्पर्शं कृतवन्तः; स च स्पर्शः अग्निवाय्वोः समीपगमनयक्षसंवादरूपः; इन्द्रस्य तु समीपगमन उमासंवादरूपः। अग्निवायुमहेन्द्राणाम् इतरदेवापेक्षया अधिकमहिमत्वे कारणान्तरमाह - **ते** - अग्निवायुमहेन्द्राः **हि** यस्मात् **एनत्** - ब्रह्म **प्रथमः** - छान्दसः लिङ्गव्यत्यासः। प्रथमम् इतरदेवापेक्षया पूर्वम् इत्यर्थः। **विदाञ्चकार** - छान्दसः वचनव्यत्यासः। विदाञ्चक्रुः - ज्ञातवन्तः। तत्र इन्द्रस्य देवीवचनात् ज्ञानम्, अग्निवाय्वोस्तु इन्द्रवाक्यादिति विवेकः।

## सुबोधिनी

### देवेषु अग्निवाय्विन्द्राणां श्रेष्ठता

**यत्** इति प्रत्येकं सम्बध्यते लिङ्गव्यत्ययश्छान्दसः। **तस्माद्वा** - तस्मादेव **एते देवा अन्यान् देवान्, अतितरामिव** - महिम्ना अतिशेरत इत्यर्थः। 'इव' इति अनर्थकम्,

---

1 **वचनव्यत्ययः** - बहुवचने प्रयोक्तव्ये, प्रथमो विदाञ्चकार इति एकवचनप्रयोगः।

2 'अत एव इत्यारभ्य .......छान्दसः' इत्यन्तं नास्ति। **क,ख,ग.**

3 **अनर्थः** - अर्थविशेषरहितः वाक्यालङ्काराद्यर्थकः।

एवार्थकं वा । के ते देवाः? इत्यत्राह - **यदग्निः** इति । योऽग्निः यो वायुः यः इन्द्रः । कस्मा-त्तेऽन्येभ्यो अतिशयिताः? इत्यत्राह - **ते हि** - यस्मात् ते अग्न्यादयः, **एनन्नेदिष्ठम्** - समीपगतं **पस्पर्शुः** - स्पर्शश्च अत्र सन्निधिगमनसंवादादिरूपः सम्बन्धः । **हि** - यस्मात् **ते एनत्** - ब्रह्म, **प्रथमः** - प्रथमम्, **विदाञ्चकार** - विदाञ्चक्रुः । वचनव्यत्ययः छान्दसः । उमावचनेन इन्द्रस्य, इन्द्रवाक्येन च अग्निवाय्वोः तत्परिज्ञानम्; अन्ये तु पश्चादेव व्यजानन्त । इमे प्रथमं व्यजानन् इत्युच्यते ।

**तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् ।**
**स ह्येनन्नेदिष्ठं पस्पर्श । स ह्येनत् प्रथमो**
**विदाञ्चकार ब्रह्मेति ।३।**

## प्रतिपदार्थदीपिका

इन्द्रस्य योग्यताधिक्यप्रदर्शनम्

तस्माद्वेति । तस्मादेव हेतोः, अग्न्यादिभ्यः प्रथमम् इन्द्रस्य परब्रह्मज्ञानसद्भावाद्धेतोः, **इन्द्रः अन्यान्** सर्वान् **देवान् अतितरामिव** परं ब्रह्म **पस्पर्श** - ददर्श इत्यर्थः । **स हि** - इन्द्रो हि **एनत्**- यक्षस्वरूपं **प्रथमः**[1] - आदौ इत्यर्थः । **ब्रह्मेति विदाञ्चकार** - ज्ञातवान् । यद्वा **स हि** - इन्द्रो हि **प्रथमः** - अग्र्यः अतः सर्वदेवातिशायीति भावः ।

## प्रकाशिका

अग्निवाय्वपेक्षया इन्द्रस्य अतिशायित्वम्

**'तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् । स ह्येनन्नेदिष्ठं पस्पर्श । स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति'** । अग्निवाय्विन्द्राणां मध्ये यस्मादिन्द्रः सन्निहितं ब्रह्म दृष्टवान्, सर्वेभ्यः पुरस्तात् पार्वतीमुखात् इदं ब्रह्मेति ज्ञातवान्, अतः सर्वातिशायीत्यर्थः ।

## आनन्दभाष्यम्

इन्द्रस्य सर्वदेवताधिक्य हेतुः

अग्निवाय्वपेक्षयाऽपि इन्द्रस्याधिकमहत्त्वं साधयति-**तस्मात्**-यस्मात् यक्षरूपब्रह्मणः

---

1 **प्रथमः**:- प्रथमशब्दः प्रधान-अत्युत्तम-प्रथमपुरुष-आरम्भपूर्व-अग्र्य-आदि-विभक्ति-नवीनार्थेषु कोशे दृष्टाः ।

समीपदेशगामिषु अग्निवायुमहेन्द्रेषु इन्द्र एव **प्रथमः** सन् उमावाक्यात् ब्रह्म ज्ञातवान्, तस्माद्धेतोः **वै** निश्चयेन इन्द्रः **अन्यान्** - स्वव्यतिरिक्तान् अग्निवायुवरुणादीन् **अतितरामिव** - अतिशयेन अतिक्रम्य वर्तते ऐश्वर्यादिना इत्यर्थः। **स** - इन्द्रः **हि** - यस्मात् **एनत्** - ब्रह्म **नेदिष्ठं पस्पर्श** - तत्समीपं गतवान्, उमादेव्यासह ब्रह्मविषयकसंवादं च कृतवान्। अन्यमपि श्रेष्ठत्वे हेतुमाह **सः** - इन्द्रः **हि** - यस्मात् **एनत्** - ब्रह्म प्रथमम् अग्निवायुभ्यां यक्षेणकृतसंवादाभ्यामपि पूर्वम् उमावाक्यात् **ब्रह्मेति विदाञ्चकार** - यदेतत् दृष्टं यक्षस्वरूपम् अन्तर्हितं तत् ब्रह्मैवेति विदितवान्। सर्वतः प्रथमं ब्रह्मज्ञानं इन्द्रस्यैव जातम्। अतः इन्द्रः सर्वेभ्यो देवेभ्यो गरीयान् ऐश्वर्य बलबुद्धयादिभिः इति भावः।

## सुबोधिनी

### इन्द्रस्य सर्वश्रेष्ठता

अग्न्यादिष्वपि इन्द्रस्य श्रैष्ठ्यमाह - **तस्मात्** इति। स्फुटम्।

**तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा इति,**
**इन्न्यमिष(मीमिष)दा इत्यधिदैवतम्।४।**

## प्रतिपदार्थदीपिका

### ब्रह्मणः आविर्भावतिरोभावस्य उपमानम्

**तस्यैष आदेश** इति। **तस्य** - तिरोहितपरब्रह्मणः **य एष आदेशः** - य एषः वक्ष्यमाणः **आदेशः** - उपमानरूप उपदेशः **यदेतद्विद्युतो व्यद्युतदा** इति। **यत्** - लोकप्रसिद्धम् **एतत्** - लोकप्रकाशकरं **विद्युतो व्यद्युतत् आ** - 'आ' इति उपमानार्थकः। विद्युतो विद्योतनमिव, ब्रह्मणो विद्योतनमपि क्षणिकम् इत्यर्थः। उपमानान्तरमाह - **इन्न्यमीमिषदा इति** - 'इत्' शब्दः उपमानान्तरसमुच्चयार्थकः। 'आ' इति प्रसिद्धार्थकः। यथा चक्षुः **न्यमीमिषत्** - मीलितमभूत्, तद्वत् ब्रह्मणोऽपि अन्तर्धानम्। यद्वा यथा विद्युतः **व्यद्युतत्** - विद्योतनं कुर्वन्ति। **न्यमीमिषत्** - तिरोहिताः भवन्ति। वचनव्यत्ययश्छान्दसः। तद्वत् ब्रह्मणस्तिरोभावप्रकाशौ इति मन्तव्यम्। **इत्यधिदैवतम्** - अनात्मभूताकाशगतविद्युद्विषयं ब्रह्मणः उपमानदर्शनम् उक्तम्।

## प्रकाशिका

विद्युदादिवत् ब्रह्मणः आविर्भावतिरोभावौ क्षणिकौ

**तस्यैष आदेशः । तस्य** - आविर्भूतस्य[1] सद्यस्तिरोभूतस्य ब्रह्मण **एष आदेशः** - वक्ष्यमाण उपमानोपदेश इत्यर्थः । **'यदेतत् विद्युतो व्यद्युतदा'** इति । यथा विद्युतो विद्योतनं क्षणिकम्, तद्वत् इत्यर्थः । **आ** इति प्रसिद्धौ । उपमानान्तरमाह - **इन्न्यमि (मीमि)षदा इति** अत्रापि **आ** इत्येतत् पूर्ववत् । इच्छब्दः उपमानान्तरसमुच्चयार्थः । यथा **न्यमिषत् (न्यमीमिषत्)** निमेषः, प्रकाशतिरोभावः क्षणेन, एवं ब्रह्माऽपि तिरोऽभूत्[2] इत्यर्थः । यथा विद्युतस्तिरोहिता भवन्ति इत्यर्थः (र्थे?) न्यमीमिषत् इति वचनव्यत्ययश्छान्दसः । **इत्यधिदैवतम्** - अनात्मभूताकाशादिगतविद्युद्विषयं ब्रह्मण उपमानदर्शनमुक्तम् इत्यर्थः ।

## आनन्दभाष्यम्

ब्रह्मणो आविर्भावतिरोभावयोरुपमानप्रदर्शनम्

तस्य इन्द्रादीनां पुरतः सहसाऽऽविर्भूय तिरोहितस्य ब्रह्मणः **एषः** - वक्ष्यमाणः **आदेशः** - उमोपदेशः **यत्** - यस्मात् **एतत्** - ब्रह्म **विद्युतः** इत्यत्र एकत्वे बहुवचनं छान्दसम्; **आ** शब्दश्च उपमार्थः, तस्य **विद्युतः** इत्यनेन अन्वयः । तथा च **विद्युदा व्यद्युतत्** इत्यन्वयः । विद्युदिव देवानामग्रे यक्षरूपेण ब्रह्म सहसाऽऽविर्भूतं सत् **व्यद्युतत्** यस्मात्, तस्मात् विद्युदिव दीप्तिमत् ब्रह्म समुपास्यम् इत्यर्थः । **इति** शब्दः आदेशस्वरूपसूचनार्थः; इत्ययमादेश एव इत्यर्थः । **इत्**शब्दः समुच्चयार्थः, तेन अपरोऽप्यादेशः समुच्चीयते, स कः? इत्यत्राह **न्यमीमिषत् आ,** अत्रापि **आ**शब्दः उपमार्थः; तस्य च विद्युत् इत्यनेन अन्वयः । तथा च विद्युदिव **न्यमीमिषत्** ब्रह्म । यथा, यदा विद्युत् सकृत् स्वस्वरूपं दर्शयित्वा क्षणादेव निलीना भवति; तदा कश्चित् चक्षुर्निमेषं कृतवान् इव प्रतीयते । चक्षुषो निमीलने यथा किमपि न प्रकाशते, तथैव विद्युतोऽन्तर्हितत्वे तत्प्रकाशाभावः । तथा इन्द्रागमनसमये ब्रह्म तिरोहितमभूत् इति **न्यमीमिषत्** इत्यनेन उच्यते; विद्युदिव ब्रह्म सहसा तिरोहितम् अभवत् इत्यर्थः । अयं द्वितीयः आदेशः ।

---

1 विज्ञातस्य - **क,ख,ग.**

2 तिरोहितम् - **ख**

तिरोभूतम् - **ग**

एवं विद्युदुपमानेन सहसाविर्भावतिरोभावशालि ब्रह्म, द्योतनात् द्योतनगुणवत्तया उपासनीयम् इति **अधिदैवतम्।** देवतोपमानेन ब्रह्मणः उपासनीयादेशः कृतः। देवता तु अत्र बाह्यभूतरूपा विद्युदेव।

तेजसाच्छादकं परं ब्रह्म

'न्यमीमिषत्' इत्यत्र स्वार्थे णिच्। यद्वा विद्युत इति द्वितीयाबहुवचनम्। तच्च आदिरूपार्थबोधकम्। तथा च विद्युतः विद्युदादीन् तेजोधातून्, आशब्दोऽस्मिन् पक्षे समन्तादित्यर्थकः। तेन **आ** - समन्तात्, एतत् ब्रह्म **व्यद्युतत्** - अदीपयत्, विद्युदादीनां तेजःपदार्थानामपि प्रकाशकम् एतत् ब्रह्म, इत्येवंरूपेण उपास्यम् इति भावः। **आ न्यमीमिषत्** - समन्तात् विद्युदादीन् प्रकाशकानपि न्यमीलयत्; ब्रह्म हि सर्वशक्तिमत्तया तेषां निमीलनमपि सर्वतः कृतवत्; अतः 'तेजोधातूनां दीप्तिमतामपि निमीलनकारकं ब्रह्म' इत्येवंरूपेण उपास्यम्, इति आदेशद्वयम् अत्र अनुसन्धेयम्।

## सुबोधिनी

ब्रह्मणः यक्षरूपेण आविर्भावतिरोभावयोः उपमानदर्शनम्

अथ ब्रह्मणः तदानीन्तनाविर्भावतिरोभावे[1] निदर्शनम् उपदिशति - **तस्यैष** इति। **तस्य** - क्षणमाविर्भूय तिरोभूतस्य ब्रह्मणः, **एष आदेशः** - वक्ष्यमाण उपदेशः। **विद्युतो व्यद्युतदिति यच्च न्यमीमिषत्** इति, एष आदेश इति पूर्वेणान्वयः। वचनव्यत्ययश्छान्दसः। **न्यमीमिषत्** इति प्रकाशाभावो लक्ष्यते। स्वार्थे णिच्। यथा **विद्युत्** घनान्धकारं सहसैवापसार्य - अभिभूय, सर्वप्रकाशकम्, स्वयमेका विद्योतते, तथा तत् व्यद्योतत। यथा च सपदि क्षणेनैव अलक्षितविशेषं[2] तिरोभवति, तथा तिरोभूतं च इति भावः। 'आ' इति प्रसिद्धौ 'इत्' इत्यनर्थको निपातः।

यद्वा - चक्षुर्न्यमीमिषत्, स्वार्थे णिच्, निमेषव्यापारम् अकरोत् इति यत्, अयमपर उपमानोपदेशः इत्यर्थः। इतः[3] समुच्चयोऽर्थः। यथा विद्युत् सहसा आविर्भूय सहसा तिरोभवति, यथा च निमेषव्यापारः पक्ष्मणोः संश्लेषरूपः, क्षणेन सहसा भूत्वा सहसाऽपैति, तथा ब्रह्म

---

1 **आविर्भावतिरोभावे** - आविर्भावश्च तिरोभावश्च अनयोः समाहारः आविर्भावतिरोभावम् तस्मिन् इति समाहारद्वन्द्वेन प्रयोगोऽयं निर्वाह्यः; अन्यथा आविर्भाव - तिरोभावयोः इति पुल्लिङ्गप्रयोगस्य कर्तव्यतापातात्।

2 **अलक्षितविशेषम्** - स्वप्रकाशेन संनिकृष्टानां विशेषरूपेण ग्रहणात् पूर्वमेव।

3 **इतः** - इत् इत्यव्ययस्य।

आविर्भूतं तिरोभूतं च, इति भावः। **इत्यधिदैवतमिति**। एवं प्रकारेण **अधिदैवतम्** - देवतासु बाह्येषु भूतेषु, उपमानोपदेशः कृतः इति भावः।

**अथाध्यात्मम्, यदेत(न)द्गच्छतीव च मनो न**
**(मनोऽनेन) चैन(त)दुपस्मरत्यभीक्ष्णं सङ्कल्पः ।५।**

## प्रतिपदार्थदीपिका

ब्रह्मणः आविर्भावतिरोभावौ मनोवत् चञ्चलौ

**अथ अध्यात्मम्** इति। **अथ** - अनन्तरम्, **अध्यात्मम्** - आत्मनि, देहे, अध्यात्मम् इति देहस्थदृष्टान्तः उच्यते। **यदेतत्** इति **यत्** - प्रसिद्धम् **एतत्** - परब्रह्म प्रति **मनो गच्छतीव** - मनोगमनमिव इत्यर्थः। यथा मनसः ब्रह्मविषयीकरणे चिरस्थायित्वं नास्ति, तद्वत् यक्षरूपब्रह्मणः आविर्भावोऽपि क्षणिक एव। अचिरस्थायित्वं दर्शयति - **न चैनत्** इति। **सङ्कल्पः** - सम्यक् कल्प्यन्ते कामा अनेनेति सङ्कल्पः - मनः; ध्यानविशेष इत्यर्थः। **अभीक्ष्णम्** - सार्वकालिकम्। **एतत्** - परं ब्रह्म **नोपस्मरति** - अचिरकालमेव विषयीकरोति इत्यर्थः।

## प्रकाशिका

ब्रह्मध्यानानुवृत्तिर्दुःशका

**अथाध्यात्मम्** - अनन्तरं देहस्थो दृष्टान्त उच्यत इत्यर्थः। **यदेतत् गच्छतीव च मनः** - एतत् ब्रह्म मनो गच्छतीव। ब्रह्मविषयकमनोगमनमिवेत्यर्थः। यथा मनसो ब्रह्मविषयीकरणं न चिरस्थायि, एवमेव यक्षस्य ब्रह्मणः प्रकाशोऽपि इत्यर्थः। मनसा ब्रह्मविषयीकरणं क्षणिकमेव; न चिरानुवृत्तमिति दर्शयति - **न चैतदुपस्मरत्यभीक्ष्णं सङ्कल्पः** - न हि मनोजनित **सङ्कल्पो** ध्यानविशेषः। **अभीक्ष्णम्** - चिरम् एतद्ब्रह्मोपस्मरति; न विषयीकरोति इत्यर्थः। ततश्च [1]यथा ब्रह्मणो मनसा विषयीकरणं न चिरानुवृत्तम्, एवं यक्षस्य ब्रह्मणः[2] प्रादुर्भावोऽपि न चिरानुवृत्तः। अत्र दृष्टान्तोक्तिव्याजेन 'ब्रह्मध्यानानुवृत्तिर्दुःशका' इति दर्शितं भवति।

---

1 'ततश्च' नास्ति - क,ख,ग.
2 'ब्रह्मणः' नास्ति - ख.

## आनन्दभाष्यम्

एवमधिदैवतमादेशं दर्शयित्वा अध्यात्ममपि आदेशं दर्शयति **अध्यात्ममिति।**

### मनोदृष्टान्तेन ब्रह्मोपासनम्

**अथ** - देवतायां विद्युत्स्वरूपायाम्, उपमानप्रदर्शनानन्तरम् **अध्यात्मम्** - आत्मनि इति अध्यात्मम्। आत्मशब्दः शरीरवत् शरीरान्तःस्थवाची। तथा च शरीरान्तस्थे (मनसि) ब्रह्मण उपमानोपदेशः तृतीयः इति 'अध्यात्मम्' इति वाक्यस्यार्थः। अनेन प्रेरितं मनः **एतत् गच्छति यत्** तदिव, अध्यात्ममुपदेशः इत्यन्वयो योज्यः। **अनेन** प्रेरितं **मनः** - मनोरूपमान्तरमिन्द्रियम्, **एतत्** - ब्रह्मैव **गच्छति** - विषयीकरोति **यत्** तदिव ब्रह्मणा प्रेरितस्य मनसः ब्रह्म प्रति गमनमिव, यक्षरूपं ब्रह्म आविर्भूतम् इत्युपमानोपदेशः। यथा ब्रह्मणा प्रेरितं मनः ब्रह्म विषयीकरोति क्षणम्, अनन्तरं च ततो निवर्तते; न चिरकालपर्यन्तं ब्रह्म विषयीकर्तुं शक्नोति, अतिचञ्चलत्वात्; तथैव किञ्चित्कालमेव देवानां पुरस्तात् प्रकटितमभूत्। ब्रह्म प्रति मनोगमनम् आविर्भूतस्य यक्षरूपस्य ब्रह्मणो विषये मनसः गमनं च, शरीरे एव भवति। अतः अयमुपमानोपदेशः अध्यात्मम् इत्युच्यते। येन च ब्रह्मणा प्रेरितं मनः गच्छति तद्ब्रह्म उपास्यम् इति भावः।

### प्रकारान्तरेण उपासनप्रकारः

यद्वा - अनेन ब्रह्मणा प्रेरितं मनः यद्ब्रह्म प्रति गच्छतीव; वस्तुतो न गच्छति, **'यन्मनसा न मनुते येनाहुर्मनो मतम्'** (केन. 1.6) इति श्रुतेः; तद्ब्रह्म उपास्यम् इत्यर्थः।

ननु - मनः यदि वस्तुतो ब्रह्म न विषयीकुर्यात् कथमुपासकाः ब्रह्मध्यानं कुर्युः? अत आह **अनेन चेति** - अनेनैव ब्रह्मणा अनिरुद्धस्वरूपेण अनुगृहीतं सत् मनः **एतत्** - ब्रह्म **उपस्मरति** - विषयीकरोति **अभीक्ष्णम्** - पौनःपुन्येन, भृशं वा। तन्मनः किं स्वरूपम्? इत्यत्राह **सङ्कल्प इति।** सङ्कल्पयतीति सङ्कल्पम्, सङ्कल्पजनकस्वरूपम् इत्यर्थः। छान्दसत्वात् पुल्लिङ्गता।

### मनोऽनुग्राहकस्य ब्रह्मणोऽनुसन्धानम्

यद्वा - नित्यपुल्लिङ्गस्वभाव एव सङ्कल्पशब्दः। एतेन 'यदनुग्रहे ब्रह्मस्मरणसमर्थं मनः,

अननुग्रहे च तदसमर्थं, तद्ब्रह्म उपास्यम्' इत्यादेशः व्याकृतो भवति। ब्रह्मातिरिक्तेऽपि विषये ब्रह्मानुग्रहाऽननुग्रहाभ्यामेव मनः स्मरणास्मरणकारि भवतीति उपलक्षणतोऽवगन्तव्यम्।

## सुबोधिनी

मनस इव ब्रह्मणः आविर्भावः क्षणिकः

**अथाध्यात्मम्** - अथ शरीरान्तरुपमानोपदेशः क्रियत इत्यर्थः। **मन एतत् गच्छतीति यत्,** तदिव, इत्यध्यात्ममादेश इत्यन्वयः। **एतत्** - ब्रह्म **गच्छति** - विषयीकरोति इत्येतत्। मनो ब्रह्म विषयीकरोति इति यत् तद्वदित्यर्थः। यथा मनसो ब्रह्मविषयीकरणं न चिरतरस्थायि, किन्तु क्षणमात्रम्; तथा ब्रह्मण आविर्भावोऽयमिति भावः। मनसो ब्रह्मणि अस्थैर्यमेवोपपादयति - **न चैतदुपस्मरत्यभीक्ष्णं सङ्कल्पः। सङ्कल्पः** - मनसो वृत्तिविशेषः, **अभीक्ष्णम्** असकृत्, अविच्छेदेनेति यावत्, एतत् ब्रह्म न स्मरति हि। **चो** ह्यर्थः। अनादिविषयवासनादूषिततया मनसः ब्रह्मणि बलाद्योजनेऽपि तदीया वृत्तिः क्षणं संश्लिष्य सहसैवापसरत्यन्यत्र इति भावः।

पाठान्तर योजना

मनोऽनेन चेति पाठे, ननु मनसो ब्रह्मणि चिरतरावस्थानाभावे कथमुपासकानां ध्यानं घटेत इत्याशङ्कायामाह - **अनेनेति।** सङ्कल्पः असकृत् **एनत्** - ब्रह्म स्मरति इति यत्, तत्तु अनेन प्रसन्नेन ब्रह्मणा। यद्यपि ब्रह्मणि प्रसन्ने मनसोऽवधानं तस्मिन् भवेत् तथापि अनादिवासनासंसृष्टतया प्रकृत्या मनसो ब्रह्मणि न चिरावस्थानम् इति घटेत इदमुदाहरणम् इति भावः।

सर्वं ब्रह्मप्रशासनाधीनम्

यद्वा - **तस्यैष आदेशः, आदेशः** - प्रशासनम्। **यदेतद्विद्युतो व्यद्युतत्** - विद्युतो विद्योतनमिति यत्, एष तस्य परब्रह्मण आदेशः - आज्ञा। आज्ञासाध्यत्वात्, 'आज्ञा' इति निर्देशः। इदमुपलक्षणं विचित्रव्यापाराणाम्। तथा च स्मरणम्-

**'मेघोदयः सागरसन्निवृत्तिरिन्दोर्विभागः स्फुरितानि वायोः।**
**विद्युद्विभङ्गो गतमुष्णरश्मेर्विष्णोर्विचित्राः प्रभवन्ति मायाः[1]'।**
(भ.गी.भा.9.6) इति।

---

1 **मायाः** - लीलाः।

निमेषोन्मेषादयः ब्रह्माधीनाः

एवं विचित्रव्यापारमुक्त्वा, विचित्रो वा स्यादल्पो वा स्यात्, सर्वं तदाज्ञावशगम्। तेन विना किमपि न चलतीति ऐश्वर्यं प्रदर्शयितुमाह - **न्यमीमिषदिति।** यच्च निमिषितं तदपि तत्सङ्क-ल्पायत्तमिति भावः। एवं बाह्यव्यापारस्य तदादेशगोचरत्वमुक्त्वा, आन्तरस्यापि तथात्वमाह - **अथेति।** एतन्मनो गच्छतीवेति यत्, एषोऽपि तस्याऽऽदेश इत्यन्वयः। मनः स्वदेशादप्रच-लितमेव नानादेशान्गच्छतीवेति यत्, तदपि तस्याज्ञा इत्यर्थः।

मनो न प्रचलति, अथ च गच्छतीवेति किम्? तदेतत् स्फुटयन्नाह - **अनेनेति। एतत्** - मनः सङ्कल्पो भूत्वा, सङ्कल्पद्वारेण इत्येतत्। **अभीक्ष्णम्** - असकृत् तांस्तान्विषयान् स्मरति, इदमेव गच्छतीवेति निर्दिष्टमिति भावः। इदमपि, **अनेन च** - अनेन हि ब्रह्मणा विद्युद्विभङ्ग-प्रभृतिचिन्तितनिमिषितावधि अत्याश्चर्यम् अत्यल्पं सर्वमेव व्यापारजातं तत्प्रशासनगोचरमिति भावः। तदेवं स्थितेऽर्थतत्त्वे, युष्माभिः 'अस्माकमेवायं महिमाऽस्माकमेवायं विजय' इति न भ्रमितव्यमिति व्यञ्जितम्।

**तद्ध तद्वनं नाम तद्वनमित्युपासितव्यम्। स य एतदेवं वेद, अभि हैनं सर्वाणि भूतानि संवाञ्छन्ति ।६।**

## प्रतिपदार्थदीपिका

'वनं ब्रह्म' इति उपासनप्रकारः

पुनः ब्रह्म विशिनष्टि। **तद्धेति। तद्ध तद्वनम्, तत्** - एतादृशमहिमविशिष्टं ब्रह्म **वनम् नाम - 'वन षण-सम्भक्तौ'** (धा.पा. 463, 464) इति धातोः, 'वन्यते सेव्यते सर्वैः' इति, वननामकं भवति; **ह** इति किलार्थकः। **तत्** - तस्मात् सेव्यत्वात् **वनमिति** सेव्यम् इत्युपासि-तव्यम्। अथ उपासनफलमाह - **स** इति। **स यः** - सः प्रसिद्धः **यः** - अधिकारी **एवम्**-अनेन प्रकारेण **एतत्**-ब्रह्म **अभिवेद ह**-अभितो जानाति **एनम्**-उपासकं **सर्वाणि भूतानि संवाञ्छन्ति।** अयम् अस्मदुत्तारकः[1] इति प्रार्थयन्ति।

---

1 उत्तारकः - मोक्षदः।

## प्रकाशिका

'ब्रह्म वननीयम्' इति उपासनप्रकारः

**तद्ध तद्वनं नाम; तद्वनमित्युपासितव्यम्।** एतादृशमहिमविशिष्टं तत् ब्रह्म सर्वैरपि जनैः वननीयत्वेन प्रार्थनीयत्वेन **वन**नामकं भवति। तस्मात् **तत्** ब्रह्म **वनम्** इत्युपासितव्यम् इत्यर्थः। वनत्वेनोपासनस्य फलमाह - **स य एतदेवं वेद, अभि हैनं सर्वाणि भूतानि संवाञ्छन्ति।** सर्वैरपि प्रार्थनीयो भवति इत्यर्थः।

## आनन्दभाष्यम्

तद्वनम् इत्युपासनं तत्फलञ्च

**तत्** - उक्तं ब्रह्म। **ह** - प्रसिद्धौ। **तद्वनं नाम** - तद्वनमिति नामवत्तया प्रसिद्धम् इत्यर्थः। तनोति व्याप्नोति चिदचिदात्मकं समस्तं जगत् इति तत्। **'तनु विस्तारे'** (धा.पा.1464) धातुः, 'अत्' प्रत्ययः। वन्यते सम्भज्यते उपासकैः इति वनम्। **'वन सम्भक्तौ'** (धा.-पा.463) धातुः। 'अ' प्रत्ययः। तच्च तत् वनं चेति तद्वनं कर्मधारयसमासः। सर्वत्र व्याप्तत्वात् वननभोग्यत्वाच्च तद्वनं ब्रह्म भवति, अतः **तद्वनमित्युपासितव्यम्** - तदिति नाम्ना वनेति नाम्ना च उपासनीयम् ब्रह्म, सर्वान्तर्यामिणः सम्भजनीयस्य-उपासनयोग्यत्वात्। एवमु-पासकस्य फलम् ऐहिकं प्रदर्शयति - **सः** - प्रसिद्धः **यः** अधिकारी **एतत्** - ब्रह्म **एवं** - तद्वनं नामेति रूपेण **वेद** - उपास्ते, **एनं** - तद्वनं नामेत्येवंरूपेण उपासकम्, **सर्वाणि भूतानि** - सर्वे प्राणिनः **अभि संवाञ्छन्ति** - इच्छन्ति। सर्वेषामभीष्टो भवति इत्यर्थः।

## सुबोधिनी

ब्रह्मोपासनप्रकारः

**तद्धेति। तत्** - ब्रह्म **वनम्** - सर्वैः प्रार्थनीयम्। **नाम** इति प्रसिद्धौ। यस्मात् ब्रह्म वननीयत्वेन प्रसिद्धम् **तत्** - तस्मात्, तत् ब्रह्म वनम् इत्युपासितव्यम्। **सः** - प्रसिद्धः, योऽधिकारी, **एतत्** - ब्रह्म, **एवम्** - वननीयं वेद। **एनमभि** - एनं प्रति, **सर्वाणि भूतानि संवाञ्छन्ति।** सर्वैरयमुपासको विद्यामाहात्म्याद्वननीयो भवति इति भावः।

**उपनिषदं भो ब्रूहीति। उक्ता त उपनिषत्।**
**ब्राह्मीं वाव त उपनिषदमब्रूमेति ।७।**

## प्रतिपदार्थदीपिका

### भगवदनुग्रहसाधकोपनिषत्

भो आचार्य! **उपनिषदम्** - भगवदनुग्रहसाधनप्रतिपादकोपनिषदम् **ब्रूहीति** - शिष्येणोक्ते सति आह - आचार्यः। **ते** - तव **उपनिषत्** - ब्रह्मप्रतिपादिका उपनिषत् **उक्ता, वाव** अवधारणार्थकः; उक्तैवेत्यर्थः। तथा च वयं ब्रह्मप्रतिपादिकां प्रधानोपनिषदम् अवोचामैव इति भावः। **ब्राह्मीम्** - ब्रह्मानुग्रहसाधनप्रतिपादिकाम्, **उपनिषदं ते अब्रूमेति**। वक्ष्यामः; शुश्रूषवे तुभ्यं वक्ष्यामि इति भावः।

## प्रकाशिका

एवम् **आत्मना विन्दते वीर्यम्** इत्यर्थे स्थिते सति, वीर्यावाप्तिहेतुभूतभगवदनुग्रहसाधनप्रतिपादिकाम् उपनिषदं पृच्छति **उपनिषदं भो ब्रूहीति**[1]। इतर आह - **उक्ता त उपनिषत्-ब्राह्मीं वाव त उपनिषदमब्रूमेति**। ब्रह्मप्रतिपादिकां प्रधानोपनिषदमवोचाम। अतः प्रधानोपनिषदुक्तैव। साधनप्रतिपादिकाञ्चोपनिषदं वक्ष्यामि[2], यदि शुश्रूषसे इति भावः।

## आनन्दभाष्यम्

### उपनिषद्रहस्यविषयकप्रश्नप्रतिवचनम्

पूर्वोक्तं सर्वं श्रुत्वा शिष्यः पुनराचार्यं पृच्छति - **भो** आचार्य! **उपनिषदं** रहस्यं **ब्रूहि** - उपदिश। तदा आचार्यः उत्तरयति **उक्ता त उपनिषदिति**। उपनिषत्प्रतिपाद्यं रहस्यं मया तुभ्यं सर्वमुक्तम्। तदेव दृढीकर्तुमाह आचार्यः - **ब्राह्मीं वाव त उपनिषदमब्रूमेति**। **ते** - तुभ्यं **ब्राह्मीं**[3] - ब्रह्मविषयकम् **उपनिषदम्** - उपनिषत्स्वरूपम् **अब्रूम** - उक्तवानस्मि। **वाव** - एवार्थे। 'ब्रह्मेति होवाच' इत्यादिना ब्रह्मणः प्रतिपादनं कृतमेव; अतः उपनिषत्प्रतिपाद्यं रहस्यं तुभ्यमुपदिष्टमेव; नात्र किमप्यवशिष्टं पश्यामि; यद्वदेयम् इति भावः।

## सुबोधिनी

एवमुपदिष्टः शिष्यः, ब्रह्मविद्यायां निरूपितायामपि तदुपायरहस्यं जिज्ञासुः परिपृच्छति -

---

1 भो ब्रूहीति शिष्येणोक्ते - **ख.ग.**

2 वक्ष्यामः - **ग.**

3 **ब्राह्मी** - ब्रह्मण इयम्।

**उपनिषदं भो ब्रूहीति । उपनिषदम्** रहस्यं, वक्तव्यं रहस्यं ब्रूहीत्यर्थः । आचार्य आह - **उक्तेति । ते** - तुभ्यम्, उपनिषदुक्ता । उक्तेत्येतदेव द्रढयति - **ब्राह्मीमिति ।** ब्रह्मविद्यामब्रूम किल ते । **वाव** इति एवार्थकम् । उक्तैव ब्रह्मविद्या; नात्रावशिष्टं किञ्चित् । किन्तु तदुपयोगि तु वक्ष्यमाणं शृणु इति भावः ।

**तस्यै तपो दमः कर्मेति प्रतिष्ठा;**
**वेदाः सर्वाङ्गानि सत्यमायतनम् ।८।**

## प्रतिपदार्थदीपिका

ब्रह्मविद्योत्पत्तिस्थितिकारणानि

ब्रह्मविद्याप्रतिष्ठाहेतुमाह - **तस्यै** - ब्रह्मविद्यायै **तपो दमः कर्मेति प्रतिष्ठेति ।** कायशोषणलक्षणं **तपः ।** इन्द्रियनिग्रहरूपः **दमः ।** अग्निहोत्रादिलक्षणं **कर्म । प्रतिष्ठा** - उपनिषच्छब्दितायाः ब्रह्मविद्यायाः दार्ढ्यहेतुः **वेदाः सर्वाङ्गानि** - चतुरो वेदाः षडङ्गानि **सत्यम्** - सत्यवचनं च **आयतनम्** - ब्रह्मविद्योत्पत्तिकारणम् इत्यर्थः ।

## प्रकाशिका

**तस्यै तपो दमः कर्मेति प्रतिष्ठा । तस्यै** - उक्तायै उपनिषदे । साधनभूतानि कायशोषणलक्षणं **तपः**, इन्द्रियनिग्रहरूप उपशमः, अग्निहोत्रादिलक्षणं कर्म च उपनिषच्छब्दिताया ब्रह्मविद्यायाः **प्रतिष्ठा** - दार्ढ्यहेतुः । **वेदाः सर्वाङ्गानि सत्यमायतनम्** - षडङ्गसहिताश्च वेदाः सत्यवदनञ्च ब्रह्मविद्योत्पत्तिकारणम् इत्यर्थः ।

## आनन्दभाष्यम्

ब्रह्मविद्योत्पत्तिप्रतिष्ठाहेतवः

अधुना परमकृपालुः[1] गुरुः शिष्याय ब्रह्मविद्यायाः कथं स्थितिर्भवति? कथं च सा उत्पद्यते

---

1 **परमकृपालुः** - कृपां लाति - आदत्ते इति कृपालुः 'ला' धातोः 'मितद्र्वादिभ्य उपसंख्यानम्' (**वा.3.2.180**) इति वार्तिकात् 'डु' प्रत्यये रूपम् । परमश्चासौ कृपालुश्च इति कर्मधारयः ।

इति शिष्याय ब्रह्मविद्योपयोगितया उपदिशति **तस्यै** - ब्रह्मविद्यायै **तपः** - कृच्छ्रचान्द्रायणादिकं शास्त्रपरामर्शश्च । **दमः** - इन्द्रियनिग्रहः । **कर्म** - वर्णाश्रमोचितक्रियानुष्ठानम्; अग्निहोत्रादिकर्माचरणम् इति यावत् । **इति** - एतत् त्रयं **प्रतिष्ठा** - ब्रह्मविद्यायाः स्थितिहेतुः । **वेदाः** - ऋगादयः **सर्वाङ्गानि** - शिक्षा-कल्प-व्याकरण-ज्योतिश्छन्दोनिरुक्तरूपाणि सर्वाणि षडपि अङ्गानि **सत्यम्** - यथार्थम् अपीडाजनकं वचनम् एतत् त्रयम् **आयतनम्** - स्थानं ब्रह्मविद्यायाः उत्पत्तौ कारणम् इत्यर्थः । वेदादिपरिशीलनेन ब्रह्मविद्या उत्पद्यते; उत्पन्ना च सा तपो दमविहितकर्मसेवयैव प्रतितिष्ठति इति त्रिकद्वयमेतत् विद्याकामुकैः[1] आश्रयणीयम् इति भावः ।

## सुबोधिनी

### ब्रह्मविद्या साधनानि

**तस्या** इति । **तस्यै** - ब्रह्मविद्यायै । **तपः** - कृच्छ्रचान्द्रायणादि, **दमः** - इन्द्रियनिग्रहः, **कर्म** - अग्निहोत्रादिकम्, **इति** - इदम्, **प्रतिष्ठा** - हेतुः[2] । **वेदास्तदङ्गानि सत्यमिति च, आयतनम्** - स्थानम्, हेतुः[3] इत्यर्थः । विद्यायाम् इति शेषः ।

**यो वा एतामेवं वेद, अपहत्य पाप्मानमनन्ते**
**स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ।९।**

## प्रतिपदार्थदीपिका

### ब्रह्मविद्याफलम्

अथ ब्रह्मविद्याफलमाह - **यो वा** इति । **यो वा** अधिकारी **एताम्** - अङ्गसहितां ब्रह्मविद्यां **वेद, सः पाप्मानम्** - मोक्षप्रतिबन्धकम् पुण्यपापम् **अपहत्य** - त्यक्त्वा **अनन्ते** - अपरिच्छिन्ने **ज्येये** - ज्यायसि **स्वर्गे** - निरतिशयसुखप्रदे **लोके** - श्रीवैकुण्ठलोके **प्रतितिष्ठति** - स्थावरवत् प्रतितिष्ठति इत्यर्थः । द्विरुक्तिः परिसमाप्तिद्योतनार्थम् । अनन्तज्येयपदसमभिव्याहरणात्[4] स्वर्गशब्दः न पुरन्दरस्थानपरः; किन्तु भगवल्लोकपरः ।

इति श्रीभाष्यरामानुजाचार्यकृतिषु दशविधोपनिषदन्तर्गतकेनोपनिषत्
प्रतिपदार्थदीपिकाख्यव्याख्यायां द्वितीयावतारिका समाप्ता ।

---

1 **विद्याकामुकैः** - विद्याभीप्सुभिः ।

2 **हेतुः** - दार्ढ्यहेतुः इति भावः ।

3 **हेतुः** - उत्पत्तिकारणम् इति ।

4 **समभिव्याहरणम्** - साहचर्यम् ।

## प्रकाशिका

ब्रह्मविद्याफलम्

**यो वा एतामेवं वेद** - एतां ब्रह्मविद्यामुक्तविधप्रतिष्ठायतनोपेतां यो वेद, **अपहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति** स सर्वाणि पापानि विधूय कालपरिच्छेदशून्ये **ज्येये** - ज्यायसि ज्येष्ठे सर्वोत्तरे **स्वर्गे लोके** - वैकुण्ठे लोके[1] प्रतिष्ठितो भवति इत्यर्थः। अनन्तज्येयपदसमभिव्याहारात् स्वर्गलोकशब्दो भगवल्लोकपरः।

**क्षेमाय यः करुणया क्षितिनिर्जराणां**
**भूमावजृम्भयत भाष्यसुधामुदारः।**
**वामागमाध्वगवदावदतूलवातो**
**रामानुजःस मुनिराद्रियतां मदुक्तिम्।**

इति श्रीमत्तातयार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनिपादसेवासमधिगतपारमहंस्यस्य श्रीरङ्गरामानुजमुनेः कृतिषु केनोपनिषद्भाष्यम्।

## आनन्दभाष्यम्

केनोपनिषदं विजानतः फलम्

केनोपनिषदं जानानस्य फलं वदति गुरुः - **यो वा** इति। **यो वा** - अधिकारी **एताम्** - ब्राह्मीमुपनिषदम् **एवम्** - सप्रतिष्ठां सायतनां ब्रह्मज्ञानहेतुभूतां **वेद** - जानाति। उपनिषज्ज्ञानी **पाप्मानमपहत्य** - सर्वाणिं पापानि धर्माधर्मौ अवधूय **अनन्ते** - कालपरिच्छेदरहिते अपारे च **ज्येये** - ज्यायसि अतिशयेन श्रेष्ठे, सर्वतो महत्तरे वा, **स्वर्गे** - दुःखलेशासंसृष्टे सुखे **लोके** - साकेताख्ये श्रीरामचन्द्रब्रह्मधाम्नि; यद्वा लोक्यते अनेनेति लोकः तस्मिन् प्रकाशरूपे श्रीरामाख्ये परब्रह्मणि **प्रतितिष्ठति** प्रतिष्ठां प्राप्नोति; स भगवद्धामतः पुनर्नागच्छति **'न च पुनरावर्तते'** (छां.उ.8.15.1) इति श्रुतेः **'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम'** (भ.-गी.15.6) इति स्मृतेश्च। भगवद्धामगतस्य अपुनरावृत्त्यवगमात् इति भावः। **प्रतितिष्ठति** इति पदस्यावृत्तिः समाप्तिद्योतनार्था।

इति श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषिता केनोपनिषत् समाप्ता।

---

1 वैकुण्ठलोके - **क,ख,ग.**

## सुबोधिनी

### ब्रह्मविद्याफलम्

**यो वा एताम्** - उक्तां ब्रह्मविद्याम्, **एवम्** - तपःप्रभृत्युपायसहिताम्, **वेद। स पाप्मानमपहत्य** - सर्वाणि पापान्यवधूय, **अनन्ते** - कालपरिच्छेदशून्ये, **ज्येये** - जायसि, सर्वतः श्रेष्ठे इत्यर्थः, **स्वर्गे लोके** दुःखासंभिन्नसुखे भगवल्लोके, अक्षरधाम्नि इति यावत्, **प्रतितिष्ठति** - प्रतिष्ठितो भवति। न च पुनरावर्तत इति भावः। आवृत्तिः उपनिषत्समाप्तिद्योतनार्था। 'अनन्ते ज्येये' इति पदद्वयसमभिव्याहारात् योगपौष्कल्यात्[1] स्वर्गशब्दो भगवद्धामपरः।

इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायणपरमहंसवर्ययोगिराज - श्रीगोपालानन्दस्वामिविरचितं केनोपनिषद्भाष्यम् समाप्तम्।

**इति चतुर्थखण्डः**

**श्रीरस्तु**

## उत्तरशान्तिपाठः

ओम् आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु। तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु। ओं शान्तिः शान्तिः शान्तिः।

## केनोपनिषत् समाप्ता

卐卐卐卐卐

---

1 **योगपौष्कल्यम्** - अवयवार्थस्य दुःखासंभिन्नसुखरूपस्य पूर्तिः; अन्यूनतेति यावत्।

# अनुबन्धाः

1.मंत्राणामकारादिसूचनी
2.प्रमाणानाम् अकारादिसूचनी
3.पदार्थवैविध्यसूचिकाकारादि
4.पदार्थवैविध्यसूचिका
5.भगवन्नामावलिः
6.व्यक्तिसूचनी
7.केनोपनिषदर्थसंग्रहः
8.भाष्यकाराणां चरितानि
9.उल्लेखकाराणां चरितानि
10.उल्लेखग्रन्थविवरणम्
11.सङ्केताक्षरसूचनी
12.ग्रन्थसूचनी

*****

# १. मंत्राणां अकारादिसूचनी

卐卐卐卐卐

# २. प्रमाणानाम् अकारादिसूचनी

1. असन्नेव स भवति। (तै.उ.आ. 6)
2. अहमेवैतत्पञ्चधात्मानम्। (प्र.उ. 2-3)
3. चक्षुरन्तरो यमयति। (बृ.उ.5.7.18)
4. तमेव विदित्वा। (श्वे. उ. 3)
5. प्राणमन्तरो यमयति। (बृ.उ. 5.7.16)
6. ब्रह्मविदाप्नोति परम्। (तै. उ. आ. 1)
7. यतो वाचो निवर्तन्ते। (तै. उ. आ. 9)
8. यतो वाचः.......वचनं विरुध्येत। श्री भा. जि. (श्रुतिघट्टः)
9. यो मनोऽन्तरो यमयति। (बृ.उ. 5.7.20)
10. वाचमन्तरो यमयति। (बृ.उ. 5.7.17)
11. श्रोत्रमन्तरो यमयति। (बृ.उ. 5.7.19)
12. सत्यं ज्ञानमनन्तम्। (तै.उ.आ. 1.1)
13. स नो देवः। (तै. ना. 10-19)

*****

# ३. पदार्थवैविध्यसूचिकाकारादि

| | | खण्डः | मंत्रः |
|---|---|---|---|
| 1 | अग्निम् | 3 | 3 |
| 2 | अतितरामिव | 4 | 2 |
| 3 | अतिमुच्य | 1 | 2 |
| 4 | अथ नु | 2 | 1 |
| 5 | अथो | 1 | 4 |
| 6 | अधि | 1 | 4 |
| 7 | अधिदैवतम् | 4 | 4 |
| 8 | अध्यात्मम् | 4 | 5 |
| 9 | अनन्ते | 4 | 9 |
| 10 | अनभ्युदितम् | 1 | 5 |
| 11 | अपहत्य | 4 | 9 |
| 12 | अभि | 4 | 6 |
| 13 | अभीक्ष्णम् | 4 | 5 |
| 14 | अभ्यद्रवत् | 3 | 4 |
| 15 | अमतम् | 2 | 3 |
| 16 | अविजानताम् | 2 | 3 |
| 17 | अविज्ञातम् | 2 | 3 |
| 18 | आत्मना | 2 | 4 |

| | | खण्डः | मंत्रः |
|---|---|---|---|
| 19 | आदेशः | 4 | 4 |
| 20 | आयतनम् | 4 | 8 |
| 21 | इदमुपासते | 1 | 5 |
| 22 | इदं यक्षम् | 3 | 2 |
| 23 | इषितम् | 1 | 1 |
| 24 | उपनिषदम् | 4 | 7 |
| 25 | उपप्रेयाय | 3 | 6 |
| 26 | कर्म | 4 | 8 |
| 27 | चक्षुषश्चक्षुः | 1 | 2 |
| 28 | ज्येये | 4 | 9 |
| 29 | तत् | 2 | 2 |
| 30 | तत् वनं नाम | 4 | 6 |
| 31 | तत् ह | 3 | 2 |
| 32 | तत् ह | 4 | 6 |
| 33 | ततो है वेति | 4 | 1 |
| 34 | तत एव निववृते | 3 | 6 |
| 35 | तपः | 4 | 8 |
| 36 | तस्माद्वा | 4 | 2 |
| 37 | तिरोदधे | 3 | 11 |
| 38 | दमः | 4 | 8 |
| 39 | देवेभ्यो विजिग्ये | 3 | 1 |

| | | खण्डः | मंत्रः |
|---|---|---|---|
| 40 | धीराः | 1 | 2 |
| 41 | नेदिष्ठम् | 4 | 2 |
| 42 | नः | 2 | 2 |
| 43 | न्यमीमिषत् | 4 | 4 |
| 44 | पतति | 1 | 1 |
| 45 | पस्पर्श | 4 | 3 |
| 46 | पस्पर्शुः | 4 | 2 |
| 47 | पाप्मानम् | 4 | 9 |
| 48 | पृथिव्याम् | 3 | 5 |
| 49 | प्रणीयते | 1 | 9 |
| 50 | प्रतिबोधविदितम् | 2 | 4 |
| 51 | प्रतिष्ठा | 4 | 8 |
| 52 | प्रथमः | 4 | 3 |
| 53 | प्राणिति | 1 | 9 |
| 54 | प्राणेन | 1 | 9 |
| 55 | प्रादुर्बभूव | 3 | 2 |
| 56 | प्रेत्य | 1 | 2 |
| 57 | प्रेत्य | 2 | 5 |
| 58 | प्रैति | 1 | 1 |
| 59 | बहुशोभमानाम् | 3 | 12 |
| 60 | ब्रह्मणो वा एतद्विजये | 4 | 1 |

| | | खण्डः | मंत्रः |
|---|---|---|---|
| 61 | ब्राह्मीम् | 4 | 7 |
| 62 | भूतेषु भूतेषु | 2 | 5 |
| 63 | मतं यस्य | 2 | 3 |
| 64 | मतम् | 1 | 6 |
| 65 | मनसा | 1 | 6 |
| 66 | मनसः | 1 | 2 |
| 67 | मनसो मनः | 1 | 2 |
| 68 | महिमा | 3 | 1 |
| 69 | महीयध्वम् | 4 | 1 |
| 70 | मीमांस्यम् | 2 | 1 |
| 71 | यथा | 1 | 3 |
| 72 | येन चक्षूंषि पश्यति (जीवाः) | 1 | 7 |
| 73 | यस्य मतम् | 2 | 3 |
| 74 | वाचम् | 1 | 1 |
| 75 | वाचा | 1 | 5 |
| 76 | वाचो वाचम् | 1 | 2 |
| 77 | विचित्य | 2 | 5 |
| 78 | विजानताम् | 2 | 3 |
| 79 | विजानीहि | 3 | 3 |
| 80 | विदाञ्चकार | 4 | 2 |
| 81 | वीर्यम् | 2 | 4 |

| | | खण्डः | मंत्रः |
|---|---|---|---|
| 82 | व्याचचक्षिरे | 1 | 4 |
| 83 | व्यद्युतत् आ | 4 | 4 |
| 84 | श्रोत्रमिदं श्रुतं भवति | 1 | 8 |
| 85 | श्रोत्रस्य श्रोत्रम् | 1 | 2 |
| 86 | सङ्कल्पः | 4 | 5 |
| 87 | सत्यम् | 4 | 8 |
| 88 | सर्वाणि भूतानि संवाञ्छन्ति | 4 | 6 |
| 89 | सुवेद | 2 | 1 |
| 90 | स्वर्गे लोके | 4 | 9 |
| 91 | ह | 4 | 1 |
| 92 | हैमवतीम् | 3 | 12 |

*****

# ४ पदार्थवैविध्यसूचिका

## 1. अग्निम् (3-3)

1) अखिलवस्तुदहनसमर्थं जातवेदसम्। (**प्र.दी.**)

2) अग्रगमनकर्तारं सर्वतःतेजस्विनं देवम् अग्निनामानम्। (**आ.भा.**)

## 2. अतितरामिव (4-2)

1) योग्यताभिः अतिक्रान्ता एव। (**प्र.दी.**)

2) अतिशेरते एव इत्यर्थः। (**रं.भा.**)

3) अतिशयेन अतिक्रम्यैव वर्तन्ते। महिम्ना अधिका इत्यर्थः। इवेति निपातः एवार्थः, अनर्थो वा अत्र बोध्यः। (**आ.भा.**)

4) महिम्ना अतिशेरते इत्यर्थः। इवेति अनर्थकमेवार्थकं वा। (**सु.**)

## 3. अतिमुच्य (1-2)

1) एवं ज्ञात्वा; (**प्र.दी.**)

2) ज्ञात्वा (**रं.भा.**)

3) लिङ्गशरीरं परित्यज्य (**आ.भा.**)

4) एवं ज्ञात्वा वयं भोक्तारः करणेषु सर्वथा स्वतंत्राः इति स्वातंत्र्यभ्रमं त्यक्त्वा। (**सु.**)

## 4. अथ नु (2-1)

1) अनन्तरम्, अतःपरम् (**प्र.दी.**)

2) अतःपरमेव (**रं.भा.**)

3) अथशब्दः अप्यर्थकः; (नुशब्दः अवधारणार्थकः) (**आ.भा.**)

4) इतःपरम् (एव) (**सु.**)

## 5. अथो (1-4)

1) अनन्तरम् (**प्र.दी.**)

2) अपि (**रं.भा.**)

3) कार्त्स्न्यम् (**आ.भा.**)

## 6. अधि (1-4)

1) विलक्षणम् (**प्र.दी.**)

2) अन्यदेव (आ.भा.)
3) अन्यत् (सु.)

## 7. अधिदैवतम् (4-4)

1) अनात्मभूताकाशगतविद्युद्विषयं ब्रह्मणः उपमानदर्शनम् उक्तम्। (प्र.दी.)
2) देवतोपमानेन ब्रह्मणः उपासनीयादेशः कृतः। देवता तु अत्र बाह्यभूतरूपा विद्युदेव। (आ.भा.)
4) देवातासु बाह्येषु भूतेषु, उपमानोपदेशः कृतः इति भावः। (सु.)

## 8. अध्यात्मम् (4-5)

1) आत्मनि-देहे अधि अध्यात्मम्-देहस्थदृष्टान्तः। (प्र.दी.)
2) आत्मनि इति अध्यात्मम्। आत्मशब्दः शरीरवत् शरीरान्तःस्थवाची। तथा च शरीरान्तस्थे (मनसि) ब्रह्मणः आत्मनोपदेशः तृतीयः इति अध्यात्मम् इति वाक्यस्यार्थः। (आ.भा.)
3) शरीरान्तरुपमानोपदेशः क्रियत इत्यर्थः। (सु)

## 9. अनन्ते (4-9)

1) अपरिच्छिन्ने (प्र.दी.)
2) कालपरिच्छेदशून्ये (रं.भा.)
3) कालपरिच्छेदरहिते अपारे च (आ.भा.)

## 10. अनभ्युदितम् (1-5)

1) अप्रकाशितम् (प्र.दी.)
2) अप्रकाश्यम् (रं.भा.)
3) साकल्येन न प्रकाशितम् (आ.भा.)
4) अप्रकाश्यं; वेदवाण्या अपि सुदूरम् (सु.)

## 11. अपहत्य (4-9)

1) त्यक्त्वा (प्र.दी.)
2) विधूय (रं.भा.)
3) अवधूय (आ.भा.)

## 12. अभि (4-6)

1) अभितः (**प्र.दी** )
2) अपि (**रं.भा.**)
3) प्रति (**सु.**)

## 13. अभीक्ष्णम् (4-5)

1) सार्वकालिकम् (**प्र.दी.**)
2) चिरम् (**रं.भा.**)
3) पौनःपुन्येन, भृशं वा (**आ.भा.**)
4) असकृत्; अविच्छेदेन इति यावत् (**सु.**)

## 14. अभ्यद्रवत् (3-4)

1) तत्प्रति गतवान् (**प्र.दी.**)
2) यक्षसमीपं गतः (**रं.भा.**)
3) अभि-आभिमुख्येन अद्रवत्-ब्रह्मसमीपं गतवान्, 'द्रु' गतौ धातुः। (**आ.भा.**)
4) अभिमुखीकृत्याद्रवत् बलदर्पतः अद्य ज्ञात्वाऽऽगमिष्यामि इति वेगेन अगच्छत्। (**सु.**)

## 15. अमतम् (2-3)

1) अपरिच्छिन्नत्वेन दुर्ज्ञेयमिति सम्मतम्। (**प्र.दी.**)
2) परिच्छिन्नत्वेन ब्रह्म न मनुते। (**रं.भा.**)
3) साकल्येन न मननविषयीकृतम्। (**आ.भा.**)
4) बुद्ध्या ब्रह्म साकल्येन अमतं, यः साकल्येन ब्रह्मस्वरूपं न जानामीति मन्यते इति यावत्। (**सु.**)

## 16. अविजानताम् (2-3)

1) ब्रह्मापरिच्छिन्नमिति ज्ञानवताम् (**प्र.दी.**)
2) परिच्छिन्नत्वज्ञानशून्यानाम् (**रं.भा.**)
3) ब्रह्म मया न सम्यक् साक्षात्कृतम् इत्येवं ज्ञानवताम् (**आ.भा.**)
4) विजानद्भ्योऽन्येऽविजानन्तः, कार्त्स्न्येन न जानामि इति मन्यमानानाम् इत्यर्थः। (**सु.**)

## 17. अविज्ञातम् (2-3)

1) ब्रह्म अविज्ञातं भवति (**प्र.दी.**)

2) ब्रह्म न सम्यक् साक्षात्कृतम् (**आ.भा.**)

3) अविज्ञातं ब्रह्मस्वरूपम्। (**सु.**)

## 18. आत्मना (2-4)

1) परमात्मना (**प्र.दी.**)

2) प्रसन्नेन परमात्मना (**रं. भा.**)

3) धृत्या (**आ.भा.**)

## 19. आदेशः (4-4)

1) उपमानरूपोपदेशः (**प्र.दी.**)

2) वक्ष्यमाणोपमानोपदेशः (**रं.भा.**)

3) उमोपदेशः (**आ.भा.**)

4) वक्ष्यमाण उपदेशः (**सु.**)

## 20. आयतनम् (4-8)

1) ब्रह्मविद्योत्पत्तिकारणम् (**प्र.दी.**)

2) स्थानम्, ब्रह्मविद्याया उत्पत्तौ कारणम्। (**आ.भा.**)

3) स्थानम्, हेतुरित्यर्थः। विद्यायाम् इति शेषः। (**सु.**)

## 21. इदमुपासते (1-5)

1) इदमिति इदंत्वाकारेण पश्यन्ति (**प्र.दी.**)

2) इदमिति इदंकारगोचरतया हस्तामलकवत् सुविदिततया उपासते जनाः। (**रं.भा.**)

3) दृश्यमानं जगत् चिदचित्स्वरूपं उपासते कामाकुलितमनसः जीवा इति शेषः। (**आ.भा.**)

4) परिच्छिन्नतया हस्तामलकवत् इदंकारगोचरं यत् उपासते। (**सु.**)

## 22. इदं यक्षम् (3-2)

1) ईदृशं पूज्यं वस्तु (**प्र.दी.**)

2) एतत् यक्षस्वरूपम् (**रं.भा।**)

3) यक्षरूपेणाविर्भूतं ब्रह्म (**आ.भा.**)

4) इदं यक्षरूपम् (**सु.**)

## 23. इषितम् (1-1)

1) स्वविषये (**प्र.दी.**)

2) इष्टम्; मतम् (**रं.भा.**)

3) इष्टं विषयं प्रति। अत्र इडागमः छान्दसः। (**आ.भा.**)

4) इष्टम् इत्यर्थः छान्दसः प्रयोगः। (**सु.**)

## 24. उपनिषदम् (4-7)

1) ब्रह्मप्रतिपादकोपनिषदम्; भगवदनुग्रहसाधनप्रतिपादकोपनिषदम्। (**प्र.दी.**)

2) ब्रह्मप्रतिपादिकां प्रधानोपनिषदम्। (**रं.भा.**)

3) रहस्यम्; उपनिषत्स्वरूपम्। (**आ.भा.**)

4) रहस्यम्; (ब्रह्मविद्या) (**सु.**)

## 25. उपप्रेयाय (3-6)

1) गत्वा (**प्र.दी.**)

2) समीपं गतः (**रं.भा.**)

3) उप - समीपं प्रकर्षेण गतवान् (**आ.भा.**)

## 26. कर्म (4-8)

1) अग्निहोत्रादिलक्षणं कर्म (**प्र. दी.**)

2) वर्णाश्रमोचितक्रियानुष्ठानम्; अग्निहोत्रादिकर्माचरणम् इति यावत्। (**आ.भा.**)

## 27. चक्षुषश्चक्षुः (1-2)

1) दर्शनसामर्थ्यकर्ता (**प्र.दी.**)

2) प्रकाशकम् (**रं.भा.**)

3) दर्शनप्रदः (**आ.भा.**)

## 28. ज्येये (4-9)

1) ज्यायसि (**प्र.दी.**)

2) ज्यायसि, ज्येष्ठे सर्वोत्तरे (रं.भा.)

3) ज्यायसि, अतिशयेन श्रेष्ठे सर्वतो महत्तरे वा (**आ.भा.**)

4) ज्यायसि, सर्वतः श्रेष्ठ इत्यर्थः। (**सु.**)

## 29. तत् (2-2)

1) परं ब्रह्म (**प्र.दी.**)

2) अर्थतत्त्वं ब्रह्म (**रं.भा.**)

3) ब्रह्मस्वरूपम्, सर्वज्ञः, परमपुरुषः (**आ.भा.**)

## 30. तत् वनं नाम (4-6)

1) 'वन-षण-सम्भक्तौ' इति धातोः वन्यते सेव्यते सर्वैः इति वनं वननामकं भवति।
(**प्र.दी.**)

2) एतादृशमहिमविशिष्टं ब्रह्म; सर्वैरपि जनैः वननीयत्वेन प्रार्थनीयत्वेन वननामकं भवति। (**रं.भा.**)

3) तद्वनम् इति नामतया प्रसिद्धम् इत्यर्थः। तनोति-व्याप्नोति चिदचिदात्मकं समस्तं जगत् इति तत्। 'तनु-विस्तारे' धातुः, क्विप् प्रत्ययः। वन्यते-सम्भज्यते उपासकैः इति वनम्। 'वनसम्भक्तौ' इति धातुः। अप्रत्ययः। तच्च तद्वनं चेति तद्वनम्। कर्मधारयसमासः सर्वत्र व्याप्तत्वात् भोग्यत्वाच्च तद्वनं ब्रह्म भवति। (**आ.भा.**)

4) तत् ब्रह्म वनं सर्वैः प्रार्थनीयम्। नामेति प्रसिद्धौ। (**सु.**)

## 31. तत् ह (3-2)

1) देहाभिमानिदेवानां ब्रह्मविषयकाज्ञानम् पूर्वोक्ताज्ञानम् (**प्र.दी.**)

2) तादृशं तेषाम् अभिमानम् (**रं.भा.**)

3) अहंकारपूर्वमीक्षणं अस्माकमेवायं विजय इत्यादिरूपम् (**आ.भा.**)

4) उक्तमभिमानम् (**सु.**)

## 32. तत् ह (4-6)

1) एतादृशमहिमविशिष्टं ब्रह्म; ह इति किलार्थकः। (**प्र.दी.**)

2) एतादृशमहिमविशिष्टं तद्ब्रह्म (**रं.भा.**)

3) उक्तं ब्रह्म, प्रसिद्धौ (**आ.भा.**)

4) ब्रह्म (**सु.**)

### 33. ततो है वेति (4-1)

1) ततः पुरुषकारभूतलक्ष्म्युपदेशात् किल (प्र.दी.)
2) तदुपदेशादेव (रं.भा.)
3) ततः ह निश्चयेन एव, तस्मादुमावाक्यादेव (आ.भा.)
4) तदानीमेव (सु.)

### 34. तत एव निववृते (3-6)

1) तृणमात्रदहनासामर्थ्यादेव व्रीडितो निवृत्तः (प्र. दी.)
2) दग्धुमसमर्थो निवृत्तः (रं.भा.)
3) तस्मात् तृणादहनादेव हेतोः अस्मदपेक्षयापि बलीयः किमप्येतत् यक्षरूपमित्यवधार्य गताभिमानः शीघ्रमेव तस्मात् यक्षसमीपदेशात् निवृत्तवान्। (आ.भा.)
4) तत्क्षणादेव गतमानो गतवेगः क्षणमप्यसन्निधाय अपससार इति भावः। (सु.)

### 35. तपः (4-8)

1) कायशोषणलक्षणं तपः (प्र. दी.)
2) कृच्छ्रचान्द्रायणादिकं शास्त्रपरामर्शश्च (आ.भा.)

### 36. तस्माद्वा (4-2)

1) वा शब्दः एवार्थकः तस्मादेव हेतोः परब्रह्मसमीपगमनतत्संवादादि सम्बन्धहेतोः। (प्र.दी.)
2) तस्मादेव हेतोः। (रं.भा.)
3) वै इति निश्चये तस्माद्वै तस्मादेव। (आ.भा.)
4) तस्मादेव (सु.)

### 37. तिरोदधे (3-11)

1) अन्तर्धानं गतम् (प्र.दी.)
2) तिरोहितमभवत् (रं.भा.)
3) अन्तर्हितम् अभूत्; यद्वा अन्तर्धानं चकार (आ.भा.)

### 38. दमः (4-8)

1) इन्द्रियनिग्रहरूपः (प्र.दी.)

2) इन्द्रियनिग्रहरूप उपशमः (रं.भा.)
3) इन्द्रियनिग्रहः (आ.भा.)

## 39. देवेभ्यो विजिग्ये (3-1)

1) इन्द्रादिदेवेभ्यः; चतुर्थी देवानामनुग्रहार्थम् इत्यर्थः। प्रसिद्धदेवासुरयुद्धसमये मर्यादासेतुविदारकासुरान् जितवान्। (प्र.दी.)
2) देवानाम् अनुग्रहार्थम् असुरादीन् शत्रून् विजितवान्। (रं.भा.)
3) देवानां कृते, देवेष्वाविश्य तत्करणबलाधानेन असुरान् विजितवान्। (आ.भा.)
4) देवानां निमित्ते, विजयमकरोत्। देवानामन्तर्यामितया स्थितं ब्रह्म तेषां करणबलापादनेन विजयं तेभ्यः प्रायच्छत् इति भावः। (सु.)

## 40. धीराः (1-2)

1) चिदचिदीश्वरतत्त्वज्ञाः (प्र.दी.)
2) परमपुरुष एव मनःप्रभृतिप्रवर्तकः इति ज्ञानवन्तः जनाः। (आ.भा.)
3) स एव हृषीकेशः सर्वेन्द्रियनियन्ता सर्वं भगवान् कारयति इति अनुसन्दधानाः। (सु.)

## 41. नेदिष्ठम् (4-2)

1) समीपम् (प्र.दी.)
2) समीपे वर्तमानं तत् ब्रह्म (रं.भा.)
3) अतिशयसमीपम् (आ.भा.)
4) समीपगतम् (सु.)

## 42. नः (2-2)

1) ब्रह्मचारिणां मध्ये (प्र.दी.)
2) अस्माकं ब्रह्मचारिणां मध्ये (रं.भा.)
3) ब्रह्मज्ञानित्वेन विश्रुतानामस्माकं मध्ये (आ.भा.)
4) अस्माकं मध्ये (सु.)

## 43. न्यमीमिषत् (4-4)

1) मीलितमभूत्; तिरोहिताः भवन्ति। (प्र.दी.)
2) निमेषः प्रकाशतिरोभावः क्षणेन तिरोऽभूत् (रं.भा.)

3) तिरोहितमभूत् (**आ.भा.**)
4) तिरोभूतम् अथवा निमेषव्यापारमकरोत्। (**सु.**)

## 44. पतति (1-1)

1) प्रवर्तते (**प्र.दी.**)
2) प्रवर्तत इत्यर्थः (**रं.भा.**)
3) गच्छति (**आ. भा.**)
4) अभिपतति (**सु.**)

## 45. पस्पर्श (4-3)

1) ददर्श (**प्र.दी.**)
2) दृष्टवान् (**रं.भा.**)
3) तत्समीपं गतवान् (**आ.भा.**)

## 46. पस्पृशुः (4-2)

1) स्पृष्टवन्तः (**प्र.दी.**)
2) दृष्टवन्तः (**रं.भा.**)
3) तत्समीपं गताः, यद्वा परामर्शं कृतवन्तः (**आ.भा.**)
4) स्पर्शश्च अत्र सन्निधिगमनसंवादादिरूपः सम्बन्धः। (**सु.**)

## 47. पाप्मानम् (4-9)

1) मोक्षप्रतिबन्धकं पुण्यपापम् (**प्र.दी.**)
2) सर्वाणि पापानि (**रं.भा.**)
3) सर्वाणि पापानि धर्माधर्मौ (**आ.भा.**)

## 48. पृथिव्याम् (3-5)

1) भूम्यन्तरिक्षादिषु (**प्र.दी.**)
2) पृथिव्यन्तर्वर्ति (**रं.भा.**)
3) अत्र पृथिवीपदं लोकान्तरस्यापि उपलक्षणम्, तेन ब्रह्माण्डान्तर्वर्ति मूर्तं सर्वं स्थावरजङ्गमात्मकं वस्तु गृह्यते। (**आ.भा.**)

## 49. प्रणीयते (1-9)

1) प्रकाश्यते (प्र.दी.)
2) प्रेर्यते, शरीरधारणात्मकस्वव्यापारवान् भवति। (आ.भा.)
3) प्राणनव्यापारयुक्तो भवति। (सु.)

## 50. प्रतिबोधविदितम् (2-4)

1) प्रतिनियतो बोधः प्रतिबोधः; सत्यं ज्ञानम् अनन्तेति प्रतिपदोक्तासाधारणधर्मविशिष्टत्वेन ज्ञातम्। (प्र.दी.)
2) सत्यत्व-ज्ञानत्वानन्तत्वादिरूपासाधारणधर्मविशिष्टतया ज्ञातम्। (रं.भा.)
3) प्रतिबोधः-निदिध्यासनम्, उपासना वा, तेन विदितं साक्षात्कृतं ब्रह्म; यद्वा बुद्ध्यते इति बोधः, वेद्यं वस्तु, बोधे बोधे इति प्रतिबोधम्, प्रतिबोधं विदितम् इति प्रतिबोधविदितम्। यद्यत् वेद्यंवस्तु तत्र तत्र अन्तर्यामितया वर्तमानं ब्रह्म अस्ति इति येन विदितम्। (आ.-भा.)
4) प्रतिबोधतो विदितम्; बुद्ध्यते अनेन इति बोधः बोधकधर्मः। प्रतिनियतो बोधः प्रतिबोधः असाधारणधर्मः। (सु.)

## 51. प्रतिष्ठा (4-8)

1) दार्ढ्यहेतुः (प्र.दी.)
2) ब्रह्मविद्यायाः स्थितिहेतुः (आ.भा.)

## 52. प्रथमः (4-3)

1) अग्र्यः; आदौ (प्र.दी.)
2) पुरस्तात् (रं.भा.)
3) पूर्वम् (आ.भा.)

## 53. (न) प्राणिति (1-9)

1) घ्राणेन्द्रियस्य गन्धवत् न विषयो भवति (प्र.दी.)
2) न चेष्टते, जीवनापरपर्याय प्राणनव्यापारवत् न भवति (आ.भा.)
3) न प्राणनव्यापारविशिष्टं भवति (सु.)

### 54. प्राणेन (1-9)

1) प्राणवायुना नासिकापुटान्तरवर्तिना घ्राणेन्द्रियेण (**प्र.दी.**)
2) प्राणाख्येन करणेन (**आ.भा.**)
3) प्राणेन साधनेन (**सु.**)

### 55. प्रादुर्बभूव (3-2)

1) प्रादुर्भूतम् (**रं.भा.**)
2) प्रकटमभूत् (**आ.भा.**)
3) आविर्बभूव (**सु.**)

### 56. प्रेत्य (1-2)

1) शरीरत्यागानन्तरं लोकान्तरं गत्वा (**प्र.दी.**)
2) अर्चिरादिमार्गेण गत्वा (**रं.भा.**)
3) निष्क्रम्य मूर्धन्यया शताधिकया नाड्या निर्गत्य अर्चिरादिमार्गेण गत्वा (**आ.भा.**)
4) निर्गत्य (**सु.**)

### 57. प्रेत्य (2-5)

1) अर्चिरादिमार्गेण परमात्मानं प्रेत्य प्राप्य इत्यर्थः। (**प्र.दी.**)
2) शताधिकया मूर्धन्यनाड्या निर्गत्य (**आ.भा.**)
3) निर्गत्य, निःशेषं विनष्टपापाः प्राकृतमिमं लोकं समतिक्रम्य, देशविशेषं प्राप्य (**सु.**)

### 58. प्रैति (1-1)

1) सर्वत्र सञ्चरति (**प्र.दी.**)
2) प्रकर्षेण सञ्चरति (**रं.भा.**)
3) प्रगच्छति स्वकार्यं प्रति, शरीरधारणरूपं स्वव्यापारं करोति इत्यर्थः। (**आ.भा.**)
4) स्वकार्ये गच्छति। (**सु.**)

### 59. बहुशोभमानाम् (3-12)

1) बहुभिराभरणैः शोभमानाम् (**रं.भा.**)
2) अधिककान्तिमतीम् (**आ.भा.**)

## 60. ब्रह्मणो वा एतद्विजये (4-1)

1) परब्रह्मभूतभगवतः पूर्वोक्तासुरविजये (प्र.दी.)
2) ब्रह्मसम्बन्धिनि विजये निमित्ते (रं.भा.)
3) निरतिशयबृहत्त्ववतः सर्वान्तर्यामिनः परमपुरुषस्य वै निश्चयेन विजये (आ.भा.)
4) ब्रह्मकर्तृकेऽस्मिन् विजये (सु.)

## 61. ब्राह्मीम् (4-7)

1) ब्रह्मानुग्रहसाधनप्रतिपादिकाम् (प्र.दी.)
2) ब्रह्मप्रतिपादिकम् (रं.भा.)
3) ब्रह्मविषयाम् (आ.भा.)
4) ब्रह्मविद्याम् (सु.)

## 62. भूतेषु भूतेषु (2-5)

1) सर्वभूतेषु विद्यमानं परमात्मानम् (प्र.दी.)
2) सर्वभूतस्थं परमात्मानम् (रं.भा.)
3) सर्वभूतेषु प्रतिबोधम् इत्यर्थः, स्थितं ब्रह्म (आ.भा.)
4) प्रतिभूतमन्तर्यामितया स्थितम् (सु.)

## 63. मतं यस्य (2-3)

1) ब्रह्म परिच्छिन्नत्वेन ज्ञातमिति संमतम् (प्र.दी.)
2) यस्तु परिच्छिन्नत्वेन ब्रह्म मनुते (रं.भा.)
3) साकल्येन मननगोचरीकृतं विचारितम् इति यावत्, इति बुद्धिरस्ति। (आ.भा.)
4) यस्य बुद्ध्या साकल्येन मतम्, अशेषतो ब्रह्म जानामीति यो मन्यते इति यावत्। (सु.)

## 64. मतम् (1-6)

1) ज्ञातम्। (प्र.दी.)
2) प्रकाशितम् अथवा स्वव्यापारयुक्तम् (आ.भा.)
3) प्राकाशितम् इत्येतत्। यद्वा विषयीकृतम् मतम् इति भावे क्तः, मनोवृत्तिरुच्यते, अर्श आद्यच्, येन परमात्मना मनो मननव्यापारयुक्तम् भवति। (सु.)

### 65. मनसा (1-6)

1) अन्तःकरणेन (**प्र.दी.**)
2) मनोरूप इन्द्रियेण (**आ.भा.**)
3) मनसा करणेन (**सु.**)

### 66. मनसः (1-2)

1) अन्तःकरणस्य (**प्र.दी.**)
2) सुखदुःखाद्यान्तरवस्तूपलम्भे साधनमिन्द्रियं मनः तस्य। (**आ. भा.**)

### 67. मनः (1-2)

1) मन अवबोधने इति धातुः। अवबोधकः प्रकाशकः। (**प्र.दी.**)
2) मननोपयोगिशक्तिदाता। (**आ.भा.**)

### 68. महिमा (3-1)

1) सामर्थ्यम् (**प्र.दी.**)
2) असुरविजयोऽस्मत्कर्तृक एव; तदनुकूलसामर्थ्यादिकम्। (**रं.भा.**)
3) सर्वजन्तुकृतस्तुतिपूजादिरूपं महत्त्वम्। (**आ.भा.**)

### 69. महीयध्वम् (4-1)

1) महिमानमेव प्राप्नुथ; किन्तु विजयोऽस्मदीय इति दुरभिमानो न कर्तव्यः इत्यर्थः। (**प्र.दी.**)
2) पूजां प्राप्नुत (**रं.भा.**)
3) महिमानं स्तुतिपूजादिलक्षणं प्राप्नुत, स्वकृतविजयनिमित्तं यत् पूर्वम् अमहीयध्वं तदधुना त्यजत। स्वविजय निमित्तं गर्वं मुञ्चत इति भावः। (**आ.भा.**)
4) महिमानं प्राप्नुत (**सु.**)

### 70. मीमांस्यम् (2-1)

1) अर्थतो विचार्यम् (**प्र.दी.**)
2) विचार्यम् (**रं.भा.**)
3) विचारणीयम् (**आ.भा.**)

## 71. यथा (1-3)

1) यथावस्थितिकम् (**प्र.दी.**)
2) येन प्रकारेण (**आ.भा.**)

## 72. येन चक्षूंषि पश्यति (जीवाः) (1-7)

1) परब्रह्मणा चक्षुरिन्द्रियाणि प्रकाश्यन्ते। (**प्र.दी.**)
2) परमात्मना साधनेन पुमान् इतरत् पश्यतीत्यर्थः। (**रं.भा.**)
3) सर्वेश्वरेण प्रेरितानि चक्षुरिन्द्रियाणि पश्यन्ति स्वविषयप्रकाशकानि भवन्ति। (**आ.भा.**)
4) सुसहायेन रूपग्रहणं कुर्वन्ति। (**सु.**)

## 73. यस्य मतम् (2-3)

1) सम्यक् ज्ञातम्। (**प्र.दी.**)
2) मनुते (**रं.भा.**)
3) मननविषयीकृतं विचारितमेव इति यावत् (**आ.भा.**)
4) ज्ञातम् इति यावत्। (**सु.**)

## 74. वाचम् (1-1)

1) वागिन्द्रियमवलम्ब्य (**प्र.दी.**)
2) शब्दोच्चारणरूपम् (**आ.भा.**)
3) शब्दरूपां वाचम् (**सु.**)

## 75. वाचा (1-5)

1) वागिन्द्रियेण (**प्र.दी.**)
2) अनादिनिधनया वेदवाण्या (**आ.भा.**)

## 76. वाचो वाचम् (1-2)

1) वाग्व्यापारसमर्थकः (**प्र.दी.**)
2) शब्दोच्चारणशक्तिप्रदः (**आ.भा.**)

## 77. विचित्य (2-5)

1) स्वेतरसमस्तविलक्षणम् इति ध्यात्वा (**प्र.दी.**)
2) स्वेतरसमस्तविलक्षणत्वेन निर्धार्य (**रं.भा.**)

3) तेभ्यो विलक्षणत्वेन अवधार्य। (आ.भा.)

### 78. विजानताम् (2-3)

1) ब्रह्म एतावदिति परिच्छेदज्ञानवताम् (प्र.दी.)
2) ब्रह्म मया सम्यक् निदिध्यस्तं - साक्षात्कृतम् इति यावत्। (आ.भा.)
3) विशेषतो जानताम्; ब्रह्माऽहं सम्यक् जानामि इति मन्यमानानाम्। शास्त्रतो यथाऽवस्थितं ब्रह्मस्वरूपं ये जानन्ति, तेषां बुद्ध्या। (सु.)

### 79. विजानीहि (3-3)

1) विशेषतो बुद्ध्यस्व (प्र.दी.)
2) विशेषतो अवगच्छ (आ.भा.)

### 80. विदाञ्चकार (4-2)

1) परं ब्रह्मेति विदुः (प्र.दी.)
2) विदाञ्चक्रुः; (रं.भा.)
3) विदाञ्चक्रुः ज्ञातवन्तः (आ.भा.)

### 81. वीर्यम् (2-4)

1) ब्रह्मविद्योत्पत्त्यानुकूल्यं सामर्थ्यम् (प्र.दी.)
2) विद्यानिष्पत्त्यनुकूलं वीर्यम् (रं.भा.)
3) मनोऽवधानरूपं विद्यानिष्पत्तिजनकं बलम् (आ.भा.)
4) विद्यानिष्पत्त्यनुकूलं मनोऽवधानरूपं वीर्यम्। यद्वा प्रणिधानसामर्थ्यम् (सु.)

### 82. व्याचचक्षिरे (1-4)

1) उक्तवन्तः (प्र.दी.)
2) उपादिशन् (रं.भा.)
3) विविच्य उपदिष्टवन्तः (आ.भा.)

### 83. व्यद्युतत् आ (4-4)

1) आ इत्युपमानार्थकः (प्र.दी.)
2) आ इति प्रसिद्धौ (रं.भा.)
3) आशब्दश्च उपमार्थः, यद्वा आशब्दोऽस्मिन्पक्षे समन्तादित्यर्थकः (आ.भा.)

### 84. श्रोत्रमिदं श्रुतं भवति (1-8)

1) विषयीकृतम् (प्र.दी.)
2) श्रावणप्रत्यक्षविषयीकृतम् (आ.भा.)
3) श्रवणसमर्थम् (सु.)

### 85. श्रोत्रस्य श्रोत्रम् (1-2)

1) शृणोति अनेन इति श्रोत्रम्-श्रोत्रेन्द्रियं, तस्य अभिव्यञ्जकम्। (प्र.दी.)
2) श्रोतुः जीवस्य शब्दसाक्षात्कारे उपकारकमिन्द्रियं श्रोत्रम्, तस्य शब्दभासकत्वशक्तिदाता। परमपुरुषाहितशक्तिकस्यैव श्रोत्रेन्द्रियस्य शब्दभासने समर्थत्वात्। अतः सः श्रोत्रस्य श्रोत्रम् इत्युच्यते। (आ.भा.)
3) ज्ञातुःपुरुषस्य शब्दसाक्षात्कारे उपकारकतया किञ्चित् इन्द्रियं श्रोत्रम् उच्यते, तदपि श्रोत्रं तत्साक्षात्कारापादने स्वयं साक्षादक्षमं परं ब्रह्मापेक्षते, तदुच्यते परं ब्रह्म श्रोत्रस्य श्रोत्रम् इति। (सु.)

### 86. सङ्कल्पः (4-5)

1) सम्यक् कल्प्यन्ते कामा अनेनेति सङ्कल्पः (प्र.दी.)
2) ध्यानविशेषः (रं.भा.)
3) सङ्कल्पयतीति सङ्कल्पं सङ्कल्पजनकस्वरूपम् इत्यर्थः। छान्दसत्वात् पुल्लिङ्गता। यद्वा नित्यपुल्लिङ्गस्वभाव एव। (आ.भा.)
4. मनसो वृत्तिविशेषः। (सु.)

### 87. सत्यम् (4-8)

1) सत्यवचनम् (प्र.दी.)
2) सत्यवदनम् (रं.भा.)
3) यथार्थम् अपीडाजनकं वचनम् (आ.भा.)

### 88. सर्वाणि भूतानि संवाञ्छन्ति (4-6)

1) अयम् अस्मदुत्तारक इति प्रार्थयन्ति (प्र.दी.)
2) सर्वैरपि प्रार्थनीयो भवति इत्यर्थः। (रं.भा.)
3) सर्वे प्राणिनः इच्छन्ति, सर्वेषामभीष्टो भवति इत्यर्थः। (आ.भा.)
4) सर्वैरयमुपासको विद्यामाहात्म्यात् वननीयो भवति इति भावः। (सु.)

### 89. सुवेद (2-1)

1) सुष्ठु वेद (**प्र.दी.**)
2) सम्यक् जानामि (**आ.भा.**)
3) सुस्पष्टं जानामि (**सु.**)

### 90. स्वर्गे लोके (4-9)

1) निरतिशयसुखप्रदे श्रीवैकुण्ठलोके (**प्र.दी.**)
2) वैकुण्ठे लोके (**रं.भा.**)
3) दुःखलेशासंस्पृष्टे सुखे लोके साकेताख्ये श्रीरामचन्द्रब्रह्मधाम्नि, यद्वा लोक्यते अनेन इति लोकः, तस्मिन् प्रकाशरूपे श्रीरामाख्ये परब्रह्मणि (**आ.भा.**)
4) दुःखासम्भिन्नसुखे भगवल्लोके, अक्षरधाम्नि इति यावत्। (**सु.**)

### 91. ह (4-1)

1) ह इति किलार्थकः (**प्र.दी.**)
2) ह निश्चयेन (**आ.भा.**)

### 92. हैमवतीम् (3-12)

1) हिरण्यविकारभूषणवतीम् (**प्र.दी.**)
2) हिमवत्पुत्रीम् (**रं.भा.**)
3) हिमवतो नगाधिराजस्य पुत्रीम् (**आ.भा.**)

卐卐卐卐卐

## ५. भगवन्नामानि

देवः, श्रोत्रम्, मनः, वाक्, प्राणः, चक्षुः, वागाद्यवशम्, वागाद्याविर्भावकम्, ब्रह्म, अमतम्, मतम्, अविज्ञातम्, प्रतिबोधविदितम्, यक्षम्, वनम्, ज्येयस्स्वर्गप्रतिष्ठितम्।

*****

## ६. व्यक्तिसूचनी

अग्निः, इन्द्रः, उमा, देवताः, यक्षः, वायुः ।

## ७. । केनोपनिषदर्थसंग्रहः ।

पूर्णोपास्यात् परोऽनन्तो वागादीनामगोचरः ।
देवस्तेषां नियंतेति ब्रह्म विज्ञाय मुच्यते । १ ।

कार्त्स्न्येनावेद्यमप्येतद्विदित्वेह यथायथम् ।
तत्प्रसादाप्तशक्तिस्सन् विद्यया विन्दतेऽमृतम् । २ ।

अग्निवाय्विन्द्रमुख्यैस्तदपि त्रैलोक्यदैवतैः ।
अवेद्यमखिलेशानमनुग्रहपरं सताम् । ३ ।

विद्युद्वत् क्षणभानं तद्वनं स्थैर्येण वेदितुम् ।
शिष्यन्ते सत्यमङ्गानि वेदाः कर्म दमस्तपः । ४ ।

इत्थं तलवकारोपनिषत् खण्डचतुष्टये ।
वशीचिकीर्षुर्वागादि मुमुक्षुः प्रतिबोधितः । ५ ।

*****

# ८. भाष्यकाराणां चरितानि

## 1. रामानन्दः

**नाम** - श्रीरामानन्दाचार्यः

**देशः** - जन्मभूमिः-प्रयागः। वासस्थानं - काशी। (पञ्चगङ्गाघाट्)

**कालः** - क्रिस्तशताब्दः 1300 वा 1500

**कुलादि** - बोधायन श्रीवैष्णवसम्प्रदायः।

**आचार्याः** - विद्यागुरुः, सन्यासगुरुश्च-श्रीराघवानन्दाः। गुरुपरम्परायां रामः, सीता, चतुर्मुखः, वसिष्ठः, शक्तिः, पराशरः, व्यासः, शुकः, बोधायनः। बौधायनपुरुषोत्तमाचार्यादनन्तरं त्रयोदशपीठाधिपतिः।

**प्रशस्तिः** - वादीभपञ्चाननः, वैराग्यवारिधिः।

**शिष्याः** - श्रीकृष्णदासः, श्रीनाभस्वामी, गोस्वामितुलसीदासः, रैदासः, मीराबाई इत्यादयः।

**विशेषांशाः** - आराध्यदैवम्-सीतासहितश्रीरामचन्द्रः। साक्षात् श्रीरामचन्द्रस्य अपरावतारः। अखण्डभारतसञ्चारेण श्रीसंप्रदायप्रचारपूर्वकरक्षणम्।

**कृतयः** - दशोपनिषद्भाष्यम्, ब्रह्मसूत्रभाष्यम्, गीताभाष्यम्, श्रीवैष्णवमताब्जभास्करः इत्यादयः।

*****

## 2. रङ्गरामानुजमुनिः

**नाम** - रामानुजः, श्रीरङ्गरामानुजमुनिः ।
**देशः** - जन्मभूमिः-तिरुपतिः । वासस्थानं - काञ्चीमण्डले दीपप्रकाशसन्निधिः ।
**कालः** - क्रिस्तशताब्दः 1670 वा 1750
**कुलादि** - लक्ष्मीपुरशाखीयनल्लान्वंशः । छन्दोगाः । श्रीवत्सगोत्रः ।
**आचार्याः** - विद्यागुरुः-वात्स्य अनन्ताचार्यः । परमगुरुः ताताचार्यः ।
दीक्षागुरुः - परकालमुनिः ।
**प्रशस्तिः** - 'चतुष्षष्ठिप्रबन्धनिर्माता', 'दशोपनिषद्भाष्यकारः' ।
**विशेषांशाः** - चतुष्षष्ठिप्रबन्धनिर्माणम् तथा सिद्धान्तप्रवचनं च ।
सुहृत् - सुरपुरंवेङ्कटाचार्यः ।
**कृतयः** - मुद्रितग्रन्थाः-केन-कठ-प्रश्न-मुण्डक-मांडूक्य-तैत्तिरीय-ऐतरेय-छान्दोग्य-बृहदारण्यक-मंत्रिक-अथर्वशिखा-कौषीतकी-श्वेताश्वतर-अग्निरहस्य-पुरुषसूक्तभाष्यादयः, श्रीभाष्यमूलभावप्रकाशिका, श्रुतप्रकाशिकाभावप्रकाशिका, शारीरकशास्त्रार्थदीपिका, विषयवाक्यदीपिका, न्यायसिद्धाञ्जनटीका, तिरुप्पल्लाण्डु, तिरुप्पावै, तिरुवाय्मोळि तमिळ्दिव्यप्रबन्धादयः ।
**अमुद्रितग्रन्थाः** - कण्णिनुण्शिरुत्ताम्बुव्याख्यानम् (महोपनिषद्भाष्यम्) रामानुजसिद्धान्तसारसंग्रहः, तत्त्वनिष्कर्षः, रहस्यत्रयसारतात्पर्यकौमुदी, प्रतितंत्रपरिष्क्रिया, ईशावास्यभावदीपिका इत्यादि ।

*****

## 3. गोपालानन्दः

**नाम** - गोपालानन्दजी योगिराजः। गृहस्थाश्रमनाम-कुशालभट्टः।
**देशः** - जन्मस्थानम्-इडरदेशे टोरडाग्रामः। समाधिस्थलम्-वडताल्।
**कालः** - क्रिस्तशताब्दः 1781 माघशुक्ल अष्टमी प्रातः जननम्। क्रिस्तशताब्दः 1852 वैशाखशुक्ल पञ्चम्यां निर्याणम्। (जीवितकालः - 71 वर्षाणि 2 मासौ 27 दिनानि।)
**कुलादि** - ब्राह्मणः, शुक्लयजुर्वेदस्य माध्यंदिनशाखाध्यायी। उद्धवसम्प्रदायः।
**आचार्याः** - विद्यागुरुः-सम्बन्धिपण्डिताः। सन्यासदीक्षागुरुः -स्वामिसहजानन्दः।
**शिष्याः** - सदाशिवभट्टप्रमुखाः।
**विशेषांशाः** - आराध्यदैवम् श्रीस्वामिनारायणः।
बान्धवाः-पिता-मोतिरामः; माता-कुशलाम्बा। महिमा-आजन्मतः योगशक्तिविशिष्टः। बाल्य एव व्याकरण-न्याय-मीमांसा-ज्योतिष-वेदान्तादि सकलशास्त्रज्ञानसम्पन्नः आसीत्। अध्यापनम् योगाभ्यासः, भक्त्या भगवदाराधनं च दैनिककार्यक्रमः। (जेतलपुरे) विप्ररूपेण आगतः परमात्मा स्वस्वरूपं प्रकाश्य अन्तर्हितो बभूव। अत्रैव ब्रह्मविद्या साधिता। सदाशिवादि सज्जनाः शिष्या अभवन्। स्वयोगमहिम्ना भावनगरस्थमहाशयात् महाभारताऽऽनयनम्। शार्ङ्गपुरे हनूमन्तं प्रतिष्ठाप्य साट्टहासं हनूमतः प्रतिमायां प्रवेशकरणम्। कश्चित्पारशीकपुत्रस्य मूकतानिवारणम्।
**कृतयः** - ईशादिदशोपनिषद्भाष्यम्, भगवद्गीताभाष्यम्, ब्रह्मसूत्रदीपिका, शुकाभिप्रायबोधिका, निगूढार्थप्रकाशिका, श्रीकृष्णाभिप्रायप्रबोधिनी, अन्वयार्थप्रकाशिका, श्रुत्यर्थदीपिका, विवेकदीपः, भक्तिसिद्धिः, हरिभक्तनामरत्नावली, विष्णुयागपद्धतिः, धर्मदेवपूजाविधिः, भक्तिदेवीपूजाविधिः, पुराणोक्तश्रीकृष्णपूजा, हनूमत्पूजाविधिः इत्यादयः।

*****

## 4. भारद्वाजरामानुजाचार्यः

**नाम** - श्रीभाष्यंरामानुजाचार्यः। रामानुजय्य, तिरुवाय्मोळिप्पिळ्ळै।
**देशः** - जन्मस्थानं वासस्थानं च आन्ध्रस्थ मङ्गलाद्रिक्षेत्रसमीपे प्राचीनमङ्गलगिरिग्रामः।
**कालः** - क्रिस्तशताब्दः 1790 आरभ्य 1880 पर्यन्तम्।
**कुलादि** - नियोगिब्राह्मणः। नुर्लपाटिवंशः। भारद्वाजगोत्रः।
**आचार्याः** - पिता - श्रीभाष्यंजगन्नाथाचार्यः। विद्यागुरुः -श्रीभाष्यंनरसिंहाचार्यः।
दीक्षागुरुः - श्रीवत्सश्रीनिवासाचार्यः।
**विशेषांशाः** - पुरुषसूक्तस्य रङ्गरामानुजभाष्याभावात् पूर्वाचार्याणां भाष्यमनुसृत्य अर्थोविवृतः। अस्यपूर्वे वैष्णवेष्टिं आकलय्य, वैष्णवदीक्षां जगृहुः इति वदन्ति।
**कृतयः**-परमवैदिकसिद्धान्तः, सर्ववेदान्तसारार्थः, शिष्टाऽद्वैतिजनाचारः, शिष्टश्रीवैष्णवाचारः, सीताकल्याणसर्गव्याख्यानम्, श्रीरामजननश्लोकव्याख्यानम्, श्रीकृष्णजननश्लोकव्याख्यानम्, विष्णुपुराणप्रथमपद्यव्याख्यानम्, ज्योतिषभावार्थनिधिः, आंध्रदेशीयविप्रचरितम्, उपमावादः, दशोपनिषत्प्रतिपदार्थदीपिका, श्रीवत्सवंशतिलकश्लोकव्याख्यानम्।

# ९. उल्लेखकाराणां चरितानि

## 1. भगवद्रामानुजः

**नाम** - रामानुजः, श्रीभाष्यकारः, लक्ष्मणमुनिः, यतिराजः, इळैयाल्वार्, एम्बेरुमानार्, उडैयवर्, तिरुप्पावैजीयर्, कोयिलण्णन्, शठकोपन्पोन्नडि, भूतपुरीन्द्रः, देशिकेन्द्रः, रामानुज-भट्टर्, कृपामात्रप्रसन्नाचार्यः इत्यादि ।

**देशः** - जन्मस्थानम्-तुण्डीरमण्डलीयः महाभूतपुरी ग्रामः (श्रीपेरुम्बूदूर्) वासस्थानम्-काञ्चीपुरम्, श्रीवेङ्कटाचलक्षेत्रम्, यादवाद्रिः (मेलुकोटे), श्रीरङ्गम् इत्यादि । बृन्दावनस्थानम्-श्रीरङ्गमन्दिरप्राकारः ।

**कालः** - क्रि.श. 1017-1137. अवतारः-पिङ्गलसंवत्सरे, चैत्रशुक्ल (मेष) पञ्चमी, गुरुवासरः, आर्द्रानक्षत्रम् । परमपदप्राप्तिः-दुर्मतिसंवत्सरे, माघशुक्लदशमी, स्थिरवासरः आर्द्रानक्षत्रम् । जीवितकालः - 120 वर्षाणि ।

**कुलादि** - वडमकुलम्, 'आसूरि' वंशः, हारीतगोत्रम्, आपस्तम्बसूत्रम्, यजुश्शाखा ।

**आचार्याः** - सामान्यदर्शनाचार्यः - यादवप्रकाशः । विशिष्टाद्वैतदर्शनाचार्याः - महापूर्णः, गोष्ठीपूर्णः, श्रीशैलपूर्णः, मालाधरार्यः, श्रीवररङ्गः इति पञ्च । रहस्यार्थविशेषाणामाचार्यः काञ्चीपूर्णः । प्राचार्यस्तु यामुनमुनिः । सन्यासदीक्षागुरुः साक्षात्काञ्चीवरदराजः ।

**प्रशस्तिः** - श्रीमद्वेदमार्गप्रतिष्ठापनाचार्यः, उभयवेदान्ताचार्यः, मायावादिकोलाहलः, मंत्रवादिभयङ्करः, अभङ्गगरुडाङ्कः, नारायणपादपद्माराधकः, श्रीरङ्गेशजयध्वजः इत्यादि ।

**शिष्याः** - कूरेश-दाशरथिप्रभृतयः 74 संख्याकाः, विद्यासम्प्रदायप्रवर्तकाः, सिंहासनाधिपति संज्ञकाः, प्रधानशिष्याः । अपरे च असंख्याः । (विस्तरः गुरुपरंपराप्रभावादेव ज्ञेयः । )

**विशेषांशाः** - पिता - केशवसोमयाजी । माता - कान्तिमती । मातुलः - श्रीशैलपूर्णः । भगिनी - नाच्चियारम्मा । भागिनेयः - दाशरथिः इत्यादयः पूर्वाश्रमसम्बन्धिनः । एनं शेषावतारः इति, पञ्चायुधांशसम्भूतः, विष्वक्सेनांशसम्भूतः इति च बहुधा वर्णयन्ति । अयं यादवाद्रौ स्वकारित स्वेच्छास्वीकृत विग्रह रूपेण चकास्ति । जन्मस्थले कन्दाडैयाण्डानाख्यस्वशिष्य कारित भक्ताभिमत विग्रहो विराजते । श्रीरङ्गक्षेत्रे बृन्दावने श्रीगन्धानुलेपितः सन् स्वीय चरम-विग्रहो विलसति इति प्रथा । प्राचार्याणां यामुनाचार्याणाम् अभिलषितार्थत्रयं साधितम् एतैः इति सांप्रदायिकाः ।

**कृतयः** - वेदार्थसंग्रहः, गीताभाष्यम्, वेदान्तसारः, श्रीभाष्यम्, वेदान्तदीपः, शरणागतिगद्यम्, श्रीरङ्गगद्यम्, वैकुण्ठगद्यम्, नित्यग्रन्थः इति नव । एतेषु प्रतिपादितानामर्थानां प्रचारार्थं विविधास्वपि भाषासु गद्यपद्यात्मकाः बहवोग्रन्थाः प्रवृत्ताः ।

## 2. व्यासार्यः

**नाम** - सुदर्शनसूरिः, व्यासार्यः, वेदव्यासभट्टर्, श्रुतप्रकाशिकाचार्यः, टीकाचार्यः ।
**वासस्थानम्** - श्रीरङ्गम् ।
**कालः** - क्रि. श. 1300
**कुलादि** - वडमकुलम्, कूरेशवंशः, हारीतगोत्रम्, आपस्तम्बसूत्रम्, यजुश्शाखा ।
**शिष्याः** - पिळ्ळैलोकाचार्यः, वेदान्तदेशिकः, ईयुण्णि पद्मनाभः इत्यादयः ।
**विशेषांशाः** - नडादूर् अम्माळाख्यवात्स्यवरदाचार्यस्वामिसन्निधौ श्रीभाष्यादिग्रन्थानां अध्ययनम् । अभ्यस्तविषयाणां ग्रन्थरूपेण प्रकाश्य प्राचीनपरम्परां परिरक्ष्य, वेदान्तदेशिक-मुखेन प्रकटनम् । प्रथमतः यादवाद्रौ श्रीभगवद्रामानुजसन्निधौ श्रुतप्रकाशिकायाः उपन्यासपू-र्वकम् अर्पणम् । बान्धवाः - पिता - वाग्विजयिभट्टः, पितामहः - वेदव्यासभट्टाभिधानः श्रीराममिश्रः । पुत्रौ - वेदाचार्यभट्टः, वेदान्ताचार्यभट्टश्च ।
**कृतयः** - श्रुतप्रकाशिका, श्रुतप्रदीपिका, तात्पर्यदीपिका, शरणागतिगद्यव्याख्या, भागवत-व्याख्या, सुबालोपनिषद्भाष्यम्, नित्यग्रन्थव्याख्यानम्, प्रार्थनापंचकम्, मुक्तकश्लोकाः, संध्याभाष्यम्, पञ्चस्तवादिव्याख्या (लुप्ता) इत्यादि ।

## 3. महाचार्यः

**नाम** - रामानुजः, श्रीनिवासदासः, दोड्डय्याचार्यः, महागुरुः, महादेशिकः, महार्यः, चण्डमारुताचार्यः, घनगुरुः, घनदेशिकः इति।
**जन्मस्थानम्** - काञ्ची, चोलसिंहपुरं वा। परमपदप्राप्तिः - श्रीमुष्णक्षेत्रे।
**कालः** - जन्म - क्रि. श. 1-2-1543 निर्वाणम् - क्रि. श. 3-10-1607
**कुलादि** - वडमकुलम्, कन्दाडैवंशः, वाधूलगोत्रम्, आपस्तम्बसूत्रम्, कृष्णयजुश्शाखा।
**शिष्याः** - ज्ञानभूषणं सुदर्शनाचार्यः, नृसिंहराजः, स्वामिपुष्करिणी श्रीनिवासदासः, वात्स्यनारायणाचार्यः, चम्पकेशाचार्यः इत्यादयः।
**विशेषांशाः** - वादे विरोधिनः विजित्य, विजयनगरीयरामरायस्य सहायेन विरोधिभिः शिलया तिरोहितं चिदम्बरस्थ गोविन्दराजं प्रकाश्य तत्पूजार्थं पञ्चग्रामाणां शासनरूपेण दापनम्। शैववैष्णवकलहोपशमनम्। वेदान्तदेशिकीय सर्वग्रन्थानां व्याख्यां कृत्वा, शिष्यैः व्याख्यां कारयित्वा च दर्शनसंरक्षणम्। चोलसिंहपुरस्थ नृसिंहदेवालयस्य जीर्णोद्धारं कृत्वा, तन्मंदिरधर्मकर्तृत्वस्य स्वीकरणम् प्रथमाचार्यपुरुषत्वस्य च स्वीकरणम्। काञ्ची वरदराजस्वामिनः स्वस्थाने एव भगवदनुग्रहप्राप्तवरदराजमूर्तिदर्शनस्मारकतया तन्मन्दिरस्य तत्रैव निर्माणम्।
**कुलदैवम्** - तिरुपति श्रीनिवासः। आराध्यदैवम् - हयग्रीवः। इष्टदैवम् - श्रीकृष्णः।
**कृतयः** - चण्डमारुतः (शतदूषणीव्याख्या), वेदान्तविजयः (पञ्चभागाः) गुरूपसत्तिविजयः, ब्रह्मविद्याविजयः, सद्विद्याविजयः, अद्वैतविद्याविजयः, परिकरविद्याविजयः। पाराशर्यविजयः। उपनिषन्मङ्गलदीपिका (उपनिषद्भाष्यम्)। सर्वार्थसिद्धिव्याख्या। ब्रह्मसूत्रार्थसंग्रहः। रामानुजचरितचुळकम्। तात्पर्यदीपिका। वैभवप्रकाशिका, मुक्तकपद्यानि। शासनपद्यानि। देवराजपञ्चकम्। तनियन् इत्यादि।

*****

# ९. उल्लेखग्रन्थविवरणानि

## श्रीभाष्यम् (जिज्ञासाधिकरणम्)

'यस्यामतं तस्य मतम्', 'अविज्ञातं विजानताम्', इति ब्रह्मणः ज्ञानाविषयत्वमुक्तं चेत्; 'ब्रह्मविदाप्नोति परम्', 'ब्रह्म वेद ब्रह्मैव भवति' इति ज्ञानान्मोक्षोपदेशो न स्यात्। 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुः' इति ब्रह्मविषय ज्ञानासद्भावसद्भावाभ्यां आत्मनाशमात्मसत्तां च वदति। अतो ब्रह्मविषयवेदनमेव अपवर्गोपायं सर्वाः श्रुतयो विदधति। ज्ञानं च उपासनात्मकम्। उपास्यं च ब्रह्म सगुणमित्युक्तम्। 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति ब्रह्मणोऽनन्तस्य अपरिच्छिन्नगुणस्य वाङ्मनसयोरेतावदिति परिच्छेदायोग्यत्वश्रवणेन ब्रह्म एतावदिति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्म अविज्ञातम् अमतम् इत्युक्तम्, अपरिच्छिन्नत्वात् ब्रह्मणः। अन्यथा 'यस्यामतं तस्यमतम्', 'विज्ञातम् अविजानताम्' इति मतत्वविज्ञातत्ववचनं तत्रैव विरुध्यते।

## समन्वयाधिकरणम्

न च विदिक्रियाकर्मत्वेन वा ध्यानक्रियाकर्मत्वेन वा कार्यानुप्रवेशः; उभयविधकर्मत्वप्रतिषेधात्। 'अन्यदेव तद्विदितादथो अविदितादधि' 'येनेदं सर्वं विजानाति तत्केन विजानीयात्' इति। 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति च नैतावता शास्त्रस्य निर्विषयत्वम्, अविद्याकल्पितभेदनिवृत्तिपरत्वात् शास्त्रस्य। न हि इदंतया ब्रह्म विषयीकरोति शास्त्रम्। अपि तु अविषयं प्रत्यगात्मस्वरूपं प्रतिपादयत् अविद्याकल्पितज्ञान-ज्ञातृ-ज्ञेयविभागं निवर्तयति। तथा च शास्त्रम्- 'न दृष्टेर्द्रष्टारं पश्येः' इत्येवमादि।

'नेदं यदिदमुपासते' इत्युपास्यत्वं प्रतिषिद्धमिति चेत्, नैवम्; नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते; अपि तु ब्रह्मणो जगद्वैरूप्यं प्रतिपाद्यते। यदिदं जगदुपासते प्राणिनः, नेदं ब्रह्म; तदेव ब्रह्म त्वं विद्धि। 'यद्वाचा अनभ्युदितं येन वागभ्युद्यते' इति वाक्यार्थः। अन्यथा 'तदेव ब्रह्म त्वं विद्धि' इति विरुध्यते। ध्यानविधिवैयर्थ्यं च स्यात्। अतो ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैव अपरमार्थभूतस्य कृत्स्नस्य द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः। **(श्री.भा.)**

वेदनम् - ज्ञानम्; उपासनम्-ज्ञानविशेषः। अत्र वेदनशब्दो निष्प्रपञ्चीकरणज्ञानविशेषे

विश्राम्यति; विवक्षावशात्। अतो निष्प्रपञ्चीकरणनियोगवादस्यापि दूषणं फलितम्। विद्युपासिकर्मत्वाभावे श्रुतिमाह - **अन्यत्** इति। **विदितात्** - ज्ञेयात्; **अविदितात्** - ज्ञातुः इत्यर्थः। **अन्यदेव** इति विदिकर्मत्व निषेधः। **तदेव** इति ध्यानकर्मत्वनिषेधः। विदिकर्मत्वाभावे शास्त्रवेद्यत्वासिद्ध्या शास्त्रस्य निर्विषयत्वमाशंक्य परिहरति **न च** इति। 'ब्रह्म वेद', 'ब्रह्मवित्' इत्यादिभिः ब्रह्मणो वेद्यत्वं प्रतीयत इत्यत्राह **न हि इदन्तया** इति। इदन्तया-प्रमेयतया। **अपित्विति** प्रत्यगात्मस्वरूपं निर्विशेषमविषयतया प्रतिपादयति इत्यर्थः।

उपास्यत्वप्रतिषेधं शङ्कते **नेदम्** इति। परिहरति **नैवम्** इति। तस्य वाक्यस्य एवं निर्वाहो न युक्तः इत्यर्थः। उपास्यत्वनिषेधः प्रतीयत इत्यत्राह **नात्रेति**। कस्तर्हि अर्थः? इत्यत्राह **अपित्विति**। कथं वैरूप्य प्रतिपादनम्? इत्यत्राह **यदिदम्** इति। 'यदिदमुपासते' इत्यत्र इदमंशे निषेधस्य तात्पर्यमिति भावः। 'मनो ब्रह्मेत्युपासीत' इत्यादिना विहितप्रतीकोपासनोपास्यानि हि परिच्छिन्नानि; नेदं ब्रह्म। किंत्वपरिच्छिन्नं तदेव परं ब्रह्म इत्यर्थः। अनेन 'अन्यदेव तद्विदितात्' इत्यादिकमपि जगद्वैरूप्यपरम् इति व्याख्यातं भवति। **यत् वाचा अनभ्युदितम्** वक्तुमशक्यम्, अपरिच्छिन्नम्। **अन्यथा** इति स्ववाक्यविरोधः उक्तः। ध्यानविधिवैयर्थ्यम् इति वाक्यान्तरविरोधः उक्तः। स्वपक्षम् उपसंहरति **अतः** इति। **(श्रु.प्र.)**

## सर्वत्रप्रसिद्ध्यधिकरणम्

'प्राणस्य प्राणः' 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति,' 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इत्यादिषु। मनोमयत्वम्-विशुद्धेन मनसाग्राह्यत्वम्। प्राणशरीरत्वम्-प्राणस्याप्याधारत्वं नियन्तृत्वं च। एवं च सति 'एष म आत्माऽन्तर्हृदये एतद्ब्रह्म' इति ब्रह्मशब्दोऽपि मुख्य एव भवति। 'अप्राणो ह्यमनाः' इति मन आयत्तं ज्ञानं प्राणायत्तां स्थितिञ्च ब्रह्मणो निषेधति। **(श्री.भा.)**

**प्राणस्य प्राणः** - आधारः। 'सर्वाणि' इत्यादिवाक्ये प्राणशब्दस्य यौगिकवृत्त्या परमात्मपरत्वं प्रागुक्तम्; इदानीम् अपर्यवसानवृत्याऽपि परमात्मपरत्वेन तद्वाक्यमुपात्तम्। वैश्वानराधिकरणन्यायेन उभयथापि परमात्मपरत्वं युक्तमिति भावः। अत्र वाक्यजाते प्रतिपन्नं मनोमयादिशब्दार्थमाह - **मनोमयत्वमिति**। ग्राह्यग्राहकलक्षणसम्बन्धविशेषाभिप्रायेण मनोमय इत्युक्तमित्यर्थः। प्राणशरीरशब्दार्थमाह - **प्राणेति**। मनो विकारो मनोमयः, सर्वविकाराणां ब्रह्माधिष्ठानत्वात् ब्रह्मसामानाधिकरण्यमिति कैश्चिदुक्तम्। तदा हि मनो विकाराः सुखदुःख-इच्छाद्वेषादयो ब्रह्मेत्युक्तं स्यात्।

तदयुक्तम्; सत्यसंकल्पत्वादिकल्याणगुणप्रकरणविरोधात्, हेयगुणविशेषाणाम् उपास्यत्वानुपपत्तेश्च। उक्तं हि 'यथाक्रतुः अस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति' इति अतो हेयगुणापत्तिरेव फलं स्यात्। प्राणप्रेर्यं शरीरमस्येत्यर्थश्चेत्-प्राणशब्देन प्राणसम्बन्ध्यभिधानं क्लिष्टं स्यात्। प्राणश्च शरीरं च अस्येति समासो न घटते। प्राणः शरीरे यस्येति व्यधिकरणबहुव्रीहिश्च क्लिष्टः। अथो यथोक्त एवार्थः इत्यभिप्रायः। उपसंहारस्वारस्यमाह - **एवञ्चेति**। मनःप्रभृतिनिषेधवाक्यार्थमुक्तार्थाविरुद्धमाह - **अप्राण** इति। ग्राह्यग्राहकभावनियन्तृनियाम्यत्वादिरूपसम्बन्धविशेषो विधेयः, उपकरणोपकरणित्वलक्षणसम्बन्धविशेषो निषेध्य इत्यभिप्रायः। **(श्रु.प्र.)**

## विषयवाक्यदीपिका

समन्वयाधिकरणम्

**अन्यदेव तद्विदितादथो अविदितादधि।**
**इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे।।**

ये अस्माकं पूर्वे गुरवः उपादिशन् तद्ब्रह्म सर्वात्मना विदितादपि विलक्षणं सर्वात्मना अविदितादपि विलक्षणमिति तेषां वाचं श्रुतवन्तो वयम् इत्यर्थः। एतदेव प्रपञ्चयति-

**यद्वाचानभ्युदितं येनवागभ्युद्यते।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते।**

वागादिभिः यदप्रकाश्यं स्वयं वागादीन्द्रियप्रकाशकं च यत्। तदेव ब्रह्म इति जानीहि। यद्वस्तु इदम् इति इदङ्कारगोचरतया हस्तामलकवत् सुविदिततया उपासते जनाः तद्ब्रह्म न भवति प्राकृतजनोपास्यजगद्विलक्षणं ब्रह्म इत्यर्थः।

## शारीरकशास्त्रार्थदीपिका

(समन्वयाधिकरणम्)

अफलत्वनिबन्धन तदनारम्भशङ्कानिराकरणार्थं चतुर्थमिदमधिकरणम्। अस्य च वाक्यद्वयं विषयः। तदर्थो लिख्यते-तलवकारोपनिषदि-

**'अन्यदेव तद्विदितादथो अविदितादधि ।**
**इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे' ।**

ये अस्माकं पूर्वे गुरवः उपादिशन् तत्र ब्रह्म सर्वात्मना विदितादपि विलक्षणं, सर्वात्मना अविदितादपि विलक्षणमिति तेषां वाचं श्रुतवन्तो वयम् इत्यर्थः । एतदेव प्रपञ्चयति-

**'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' ।**

वागादिभिः यदप्रकाश्यं स्वयं वागिन्द्रियप्रकाशकञ्च यत् तदेव ब्रह्म जानीहि । यद्वस्तु इदमिति इदंकारगोचरतया हस्तामलकवत् सुविदिततया उपासते जनाः तद्ब्रह्म न भवति । प्राकृतजनोपास्यजगद्विलक्षणं ब्रह्म ।

अत्रैवं पूर्वपक्षः-'यद्वाचानभ्युदितमिति वागादिभिः अप्रकाश्यस्य सिद्धरूपत्वेन प्रवृत्तिनिवृत्त्यन्वयविरहिणो ब्रह्मणः स्वरूपेणापुरुषार्थत्वात् पुरुषार्थानवबोधिनः शास्त्रस्य अप्रामाण्यम् । न च मोक्षसाधन-ब्रह्मध्यानविधिपरत्वेन प्रामाण्यं वक्तुं शक्यम् । असत्यपि ब्रह्मणि तद्ध्यानविधानसम्भवात् न ब्रह्मसद्भावे तात्पर्यमिति ब्रह्मणः शास्त्रप्रमाणकत्वं न सम्भवति ।

न च - यथा व्याधकुलसंवर्धितराजकुमारस्य 'पिता ते महाभोगशाली राज्यं परिपालयन्नास्त' इत्याप्तवाक्यम् उपशृण्वतो हर्षो जायते, एवमिहापि पितृस्थानीयो निखिलहेयप्रत्यनीकत्वसर्वज्ञत्वसत्यसङ्कल्पत्वदयामहोदारत्वाद्यनन्तकल्याणगुणशालीभगवानास्त इति श्रुतिवाक्यश्रोतुर्महाहर्षो भवतीति सिद्धपरवाक्यस्यापि हर्षहेतुत्वेन पुरुषार्थपर्यवसायित्वम् उपपद्यत इति - वाच्यम् । तस्य हर्षस्य राजकुमारहर्षस्येव स्थिरपुरुषार्थत्वाभावापत्तेः । न च - तत्प्राप्त्युपायमन्विष्य पश्चात् ब्रह्मप्राप्तस्य तदीयनिरतिशयानन्दानुभवः पुरुषार्थः इति - वाच्यम् । परकीयानन्दज्ञानस्य परंप्रत्यपुरुषार्थत्वादिति ।

राद्धान्तस्तु-मैवम् स्वमन्दिरान्तस्थनिधिबोधकवाक्यवत् सिद्धपरवेदान्तवाक्यादपि तादृग्ब्रह्मावबोधोऽस्त्येव । अन्यथा हर्षो नोत्पद्येत । स च ब्रह्मावबोधः स्वात्मनिरतिशयानन्दसाक्षात्कारहेतुः । स च साक्षात्कारः ब्रह्मणा सह भोगसाम्राज्यसहितः स्थायीपुरुषार्थः । न च तत्र स्वकीयत्वमपेक्षितम् । साक्षात्कारत्वाविशेषेण अतीतसुखादिस्मरणस्यापि सुखसाक्षात्कारवत् पुरुषार्थत्वप्रसङ्गात्, तत एव अतिप्रसङ्गनिरासे स्वकीयत्वविशेषणानपेक्षणात् । तस्मात् वेदान्ताः निधिबोधकवाक्यवत् स्वतः फलशालिनः इति ।

## वेदान्तविजयमङ्गलदीपिका (पु. सं 62-64)

नन्वेवम् अवेद्यत्वाभावे 'यत्तदद्रेश्यमग्राह्यम्' 'यस्यामतं तस्य मतं मतं यस्य न वेद सः' 'अविज्ञातं विजानतां विज्ञातमविजानतां' 'विज्ञातारमरे केन विजानीयात्' 'येनेदं विजानाति तं केन विजानीयात्' 'अगृह्यो न गृह्यते' इत्यादि श्रुतीनां का गतिः? इति चेत्। वेद्यत्वश्रुत्यनुरोध एवेति ब्रूमः। न च वैपरीत्यं वक्तुं शक्यम्। वेद्यत्वश्रुतीनां वृत्तिपरत्वे लक्षणा स्यात्। तन्निषेधश्रुतीनां तु ज्ञानविशेषनिषेधपरत्वे संकोचमात्रम्, न तु लक्षणविशेषलक्षणायामपि, श्रुतार्थापरित्यागात् संकोच एव ज्यायान् अन्तरङ्गत्वलक्षणत्वात्। किञ्च 'भूयसां स्यात्सधर्मकत्वम्' इति न्यायेन वेद्यत्वश्रुतीनां बहुत्वात् प्राबल्यं इति तदनुरोधेनैव तन्निषेधश्रुतीनां अर्थो वर्णनीयः।

किञ्च 'यत्तदद्रेश्यम्' इत्यत्रैव 'यद्भूतयोनिं परिपश्यन्ति धीराः' इति श्रूयते। तत्रैकस्यैव दृशिधातोः एकत्र ज्ञानपरत्वम् इतरत्र वृत्तिपरत्वमिति न वक्तुम् शक्यम्, वैरूप्यप्रसङ्गात्।

किञ्च धीरपदेन निषेधस्याधीरविषयत्वं गम्यते। धीरशब्दस्य धीमतामग्रेसरपरत्वात्। उणादौ दशपाद्यां 'सुसूधागृधिभ्यः क्रन्' इति सूत्रेण क्रन्प्रत्ययः तद्वृत्तौ च दधाति चित्तमिति धीर इति व्युत्पादितम्। किञ्च 'यस्यामतं तस्य मतम्' इति ब्रह्मणो मतत्वमेवोच्यते। अत्र परेषामेवं योजना-यस्य ब्रह्म अमतमिति मतं तस्य मतमेव मतम् तदेव समीचीनं मतं, यस्य ब्रह्म मतमिति मतं स ब्रह्म न वेदेति। अत्र सामीचीन्यपरमतपदाध्याहारदोषः। किञ्च यस्यामतं मतं यस्य इत्यत्रामतमतपदयोः ब्रह्मपरत्वेन सन्दंशन्यायेन तन्मध्यस्थमतपदस्यापि ब्रह्मपरत्वमेव युक्तम्। अपि च उत्तरवाक्ये ब्रह्मण्यधिकारिविशेषवेदनविषयत्वस्य निषेधात् पूर्वत्रापि अधिकारिविशेषनिर्देशात् तदधिकारिवेदनविषयत्वविधिरेव स्वरसतोऽवगम्यते।

ननु 'यस्यामतं' 'मतं यस्य' इत्युभयत्रापि व्याघात इत्याशंक्य विवृणोति - **अविज्ञातमि**ति। विशब्देन कार्त्स्न्यलक्षणसामीचीन्यरूपो विशेषो विवक्षितः। ब्रह्म सम्यक् जानामि इति मन्यमानानां ब्रह्म अविज्ञातम्, याथार्थ्येन ज्ञातं न भवति, ब्रह्मासम्यक् जानामीति मन्यमानानां ब्रह्म सम्यक् ज्ञातम्, याथार्थ्येन ज्ञातमित्यर्थः। एवं **'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'** इति श्रुत्यनुसारात् परिच्छिन्नतया ज्ञानमेव निषिध्यते। प्रकरणबलात् **'सैषा आनन्दस्य मीमांसा भवति'** इत्युपक्रम्य शतगुणितोत्तरक्रमेणोत्कर्षमभिधाय **'यतो वाचो निवर्तन्ते'** इत्यभिधानात्।

किञ्च पूर्वोत्तरवाक्ययोः ब्रह्मणो वेद्यत्वस्यैव बहुशः प्रतिपादनान्नात्र वेद्यत्वनिषेधसंभवः। तथाहि - **'न तत्र चक्षुर्गच्छति'** इत्यादिना लौकिकप्रमाणागोचरत्वमुपपाद्य तथा सत्यप्रामाणिकत्वशङ्कायाम् उच्यते - **'अन्यदेव तद्विदितादथो अविदितादधि'** इति।

अस्यार्थः-**विदितात्**-लौकिकप्रमाणगम्यात् तद्ब्रह्मान्यत् अलौकिकप्रमाणगम्यमिति। अनन्तरं च **'यद्वाचानभ्युदितम्'** इत्यादिभिः पञ्चभिर्मंत्रैः **'तदेव ब्रह्म त्वं विद्धि'** इति वेद्यत्वं ब्रह्मणः पञ्चकृत्वोऽभ्यस्तम्। मनःप्राणचक्षुरादिप्रेरकत्वस्य ब्रह्मण्युपदिष्टतया तावन्मात्रेण कृत्स्नशः ब्रह्मणो ज्ञातत्वभ्रमनिराकरणाय ब्रह्मस्वरूपं त्वया मीमांसितव्यमिति गुरुणोक्ते मीमांसित्वा शिष्य आह - **मन्ये विदितम्** इति। विदितत्वे हेतुमाह - **'नाहं मन्ये सुवेदेति नो न वेद'** इति। अस्यार्थः-अहं सुवेदेति न मन्ये न वेदेति च नो मन्य इति। अनेन मम सुवेदत्वभ्रमः अवेद्यत्वभ्रमश्च नास्तीत्यर्थः। किं तर्हि सन्देहः? इत्यत्राह - **'वेद च'** इति। उपदिष्टाकारेण ब्रह्मावधारयामि इत्यर्थः। यद्वा **'नो न वेदेति वेद च'** इत्येकं वाक्यम्, ततश्च न वेदेति नो वेदेत्यर्थः, एवं च **मन्ये** इति नानुषङ्गः। यथोक्तज्ञानवानेव ब्रह्मविदित्याह - **'यो नस्तद्वेद तद्वेद नो न वेदेति वेद च'** इति। नः-अस्माकं मध्ये यः तत् ब्रह्मणः सुष्ठु वेदनाशक्यत्वं वेद स एव तद्वेद ब्रह्मवित् इत्यर्थः। यश्च **'न वेदेति नो वेद च स एव च तद्वेद'** इत्यनुषङ्गः। यद्वा यश्च न वेदेति नेति वेद च स एव तद्ब्रह्म वेद इत्यर्थः। यद्यपि तद्वेदेत्यत्रैव सुष्ठुवेदनाशक्यत्ववेद्यत्वयोः अन्तर्भावसम्भवः, तथापि वेद्यत्वस्य प्राधान्येनाभिधाय पृथक्कथनमिति मन्तव्यम्।

एवं पूर्वत्र वेद्यत्वं बहुशोऽभ्यस्तम्। उत्तरत्रापि **'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः'** इति ब्रह्मवेदनात् परमपुरुषार्थतदवेदनान्महानर्थप्राप्तिं वदति। एवं ब्रह्मणो दुर्विज्ञानत्वादि तदुत्तरखण्डे **'ब्रह्म ह देवेभ्यो विजिग्ये'** इति प्रतिपाद्य चतुर्थखण्डे 'ततो हैव विदाञ्चकार ब्रह्मेति' इन्द्रस्य ब्रह्मवेदनमुक्त्वा इन्द्र इव इतरयोः ब्रह्मवेदनमभिप्रेत्य इन्द्रवाय्वग्नीनामन्यदेवताभ्यः प्रथमं ब्रह्मज्ञानेनोत्कर्षमभिधाय तेषामपि मध्ये इन्द्रस्य प्रथमं ब्रह्मवेदनेन अग्निवायुभ्यामप्युत्कृष्टत्वमुक्तम्।

*****

# ११. सङ्केताक्षरसूचनी

| | |
|---|---|
| अनुवादः | अनु |
| कर्तृ | क |
| ग्रन्थनाम | ग्रं |
| ग्रन्थलिपिः | ग्रं |
| द्राविडी | द्रा |
| आन्ध्री | आ |
| देवनागरी | दे |
| प्रकाशनम् | प्र |
| भाषा | भा |
| लिपिः | लि |
| विशेषः | वि |
| सम्पादकः | सं |
| संस्कृतम् | सं |

*****

# १२. ग्रन्थसूचनी

## मूलग्रन्थाः-भाष्यग्रन्थाश्च


1. ग्रं. अष्टाविंशत्युपनिषदः
   सं. वासुदेवलक्ष्मणशास्त्री पन्सीकर्
   वि. ईशोपनिषदारभ्य मुक्तिकोपनिषत्पर्यन्तम्
   २८ उपनिषदः सन्ति ।
   प्र. तुकाराम् जावजी — भा. सं.
   निर्णयसागर् प्रेस् — लि. दे.
   बम्बई-1928.
2. ग्रं. अष्टोत्तरशतोपनिषदः
   सं. अनेके पण्डिताः
   वि. सिद्धान्तिसुब्रह्मण्यशास्त्रिणा कृत ईशावास्य-
   तात्पर्यसंग्रहः, महावाक्यरत्नावली च स्तः ।
   प्र. वाविळ्ळरामस्वामि अण्ड् सन्स्, — भा.सं.
   श्रीराम प्रेस्, मद्रास्-1928 — लि.आ.
3. ग्रं. अष्टोत्तरशतोपनिषदः
   सं. सिद्धान्तिसुब्रह्मण्यशास्त्री
   प्र. सिद्धान्तिशिवशङ्करशास्त्री — भा.सं.
   बेङ्गलूर्-1900 — लि. आ.
4. ग्रं. अष्टोत्तरशतोपनिषदः
   प्र. आदिकलानिधि प्रेस् — भा. सं.
   मद्रास्-1883. — लि. आ.
5. ग्रं. अष्टोत्तरशतोपनिषदः
   सं. वेङ्कटकृष्णशास्त्री
   प्र. श्रीरामचन्द्रशास्त्री — भा.सं.
   मद्रास्-1896. — लि. ग्रं.

| | | | |
|---|---|---|---|
| 6. | ग्रं. | दशोपनिषदः | |
| | सं. | शात्तनूर् कल्याणसुन्दरशास्त्री | |
| | प्र. | वाजपेय कृष्णशास्त्री | भा. सं. |
| | | मद्रास्-1903 | लि. आ. |
| 7. | ग्रं. | दशोपनिषदः | |
| | सं. | यनमदलवेङ्कटाचार्यः | |
| | वि. | द्वितीयमुद्रणम् 1880 तमे वर्षे | |
| | प्र. | विवेककलानिधिप्रेस् | भा. सं. |
| | | यनमदल-1876. | लि. आ. |
| 8. | ग्रं. | द्वादशोपनिषदः | |
| | सं. | धर्माधिकारी चक्रवर्ति अय्यङ्गार्यः | |
| | प्र. | विद्यातरङ्गिणी प्रेस् | भा. सं. |
| | | मैसूर्-1891. | लि. आ. |
| 9. | ग्रं. | ईशादिविंशदुत्तरशतोपनिषदः | |
| | सं. | काव्यतीर्थ नारायणरामाचार्यः | |
| | वि. | ईशादिमुक्तिकपर्यन्तं 120 उपनिषदः सन्ति | |
| | प्र. | निर्णयसागरप्रेस् | भा. सं |
| | | बम्बई-1948 | लि. दे. |
| 10. | ग्रं. | ईशकेनकठप्रश्नमुण्डकमाण्डूक्यतैत्तिरीय ऐतरेयोपनिषदः | |
| | सं. | स्वामिवैष्णवाचार्यः | |
| | वि. | रामानन्दविरचितमानन्दभाष्यसहितम् | |
| | प्र. | रामानन्दवेदान्तप्रचारसमितिः | भा. सं. |
| | | अहमदाबाद्-1967. | लि. दे. |
| 11. | ग्रं. | ईशादिदशोपनिषद्भाष्यम् | |
| | क. | गोपालानन्दस्वामी | |
| | सं. | एम्बार्कृष्णमाचार्यः | |
| | वि. | समूलं विस्तृतप्रस्तावना सुबोधिनी व्याख्या च । | |
| | प्र. | भट्टजयकृष्णबापूजी | भा. सं. |
| | | निर्णयसागर् प्रेस्, बम्बई-1932. | लि. दे. |

| | | | |
|---|---|---|---|
| 12. | **ग्रं.** | ईशावास्योपनिषत्, केनोपनिषत्, कठोपनिषच्च | |
| | **सं.** | उत्तमूर् वीरराघवाचार्यः | |
| | **वि.** | रङ्गरामानुजमुनिविरचितभाष्यसहिते केन-कठोपनिषदौ | |
| | **प्र.** | उभयवेदान्तग्रन्थमाला | **भा.**सं. |
| | | मद्रास्-1948 | **लि.**दे. |
| 13. | **ग्रं.** | उपनिषत्षट्कम् | |
| | **सं.** | धर्माधिकारी चक्रवर्ति अय्यङ्गार्यः | |
| | **वि.** | शङ्करभाष्यम्, आनन्दगिरिटीका, | |
| | | रङ्गरामानुजभाष्ययुक्तम् । | |
| | **प्र.** | विद्यातरङ्गिणीप्रेस्, | **भा.**सं. |
| | | मैसूर्-1893. | **लि.**आ. |
| 14. | **ग्रं.** | ईशाद्यष्टोपनिषद्भाष्यम् | |
| | **सं.** | व.न. कृष्णमाचार्यः | |
| | **वि.** | ईशादिदशोपनिषन्मूलम्, | |
| | | रङ्गरामानुजमुनिविरचितप्रकाशिकासहिता केनोपनिषत् | |
| | **प्र.** | वैदिकवर्धिनीसभा, | **भा.**सं. |
| | | उप्पिलि अप्पन् सन्निधिः - 1923 | **लि.**ग्रं. |
| 15. | **ग्रं.** | दशोपनिषद्व्याख्यानम् | |
| | **क.** | भारद्वाजरामानुजाचार्यः | |
| | **वि.** | प्रतिपदार्थदीपिका सहितम् | |
| | **प्र.** | चिन्नवेङ्कटरत्नम्, | |
| | | विवेककलानिधिप्रेस्, | **भा.** सं. |
| | | मद्रास्-1875. | **लि.** आ. |
| 16. | **ग्रं.** | षडुपनिषद्भाष्यम् | |
| | **सं.** | वाविळ्रामस्वामिशास्त्री | |
| | **वि.** | ईशादिषडुपनिषन्मूलम् केनाद्युपन्षिदां शङ्करभाष्यम् | |
| | | आनन्दगिरिटीका, रङ्गरामानुजभाष्यं च । | **भा.** सं. |
| | **प्र.** | वाविळ्ळरामस्वामिशास्त्री मद्रास्-1939 | **लि.** आ. |

17. ग्रं. ईशावास्येत्यादि उपनिषद्भाष्यटिप्पणी
क. जयतीर्थभिक्षुः
वि. केनोपनिषन्मूलं-मध्वभाष्यञ्च अस्ति। तस्य
वादिराज-जयतीर्थयोःटीका च स्तः।
प्र. श्रीमद्वादिराजीयग्रन्थप्रकाशन समितिः — भा. सं.
उडुपि-1954. — लि. दे.

18. ग्रं. दशोपनिषदः (भाग.1)
सं. अडैयार् ग्रन्थालयस्य पण्डिताः
वि. उपनिषद्ब्रह्मयोगिकृतव्याख्यानसहिताः
प्र. अडैयार् ग्रन्थालयः
थियसाफिकल् सोसैटी. — भा. सं.
मद्रास्-1935. — लि. दे.

19. ग्रं. उपनिषदर्थसंग्रहः
क. उत्तमूर्वीरराघवाचार्यः
सं.
वि. केनोपनिषदर्थसंग्राहकपञ्चश्लोकरूपः।
प्र. आर् वेङ्कटाचारि
रामकृष्णमुद्रणालयः — भा. सं
मद्रास्-1977. — लि. दे.

20. ग्रं. केनोपनिषद्भाष्यम्
क. रङ्गरामानुजमुनिः
सं. आनन्दाश्रमपण्डिताः
प्र. आनन्दाश्रमसंस्कृतमाला — भा. सं.
पूना-1910 — लि. दे.

*****

## कर्नाटकभाषायाम् अनुवादितग्रन्थाः

1. ग्रं. केनोपनिषत्
   सं.
   अनु. यतिराजसम्पत्कुमाररामानुजजीयर्स्वामी
   वि. मूल-प्रतिपदार्थ-तात्पर्य सहिता ।
   प्र. यदुगिरियतिराजमठः
   संस्कृतिप्रचारसभा
   मेलुकोटे - 1958.

2. ग्रं. उपनिषत्
   सं
   अनु. देवुडु नरसिंहशास्त्री
   वि. विस्तृतप्रस्तावनासहितदशोपनिषदां तात्पर्यमस्ति ।
   प्र. कर्नाटकसंस्कृतिसाहित्यविभागः
   बेङ्गलूरु-1958.

3. ग्रं. उपनिषत्परिचयः
   सं.
   अनु. स्वामिसोमनाथानन्दः
   वि. केनोपनिषत्परिचयोऽस्ति ।
   प्र. प्रसाराङ्गः
   मैसूर् विश्वविद्यालयः
   मैसूर्-1968.

## द्राविडी

1. ग्रं. उपनिषत्सारम् ।
क.
सं. उत्तमूर् वीरराघवाचार्यः ।
वि. द्राविडभाषायां केनोपनिषत्सारो विवृतः ।
प्र. विशिष्टाद्वैत प्रचारिणी सभा ।
मद्रास्-1970.

2. ग्रं. दशोपनिषत्तुक्कळिन् द्राविडप्रतिपदभाष्यम् ।
वि. समूलं-द्राविडभाषायां प्रतिपदार्थसहितम् ।
मूलं च ग्रन्थलिप्यां द्राविडलिप्यांच स्तः ।
शङ्कर-रङ्गरामानुजभाष्यानुवादश्च ।

## हिन्दी

1. ग्रं. ईशादिपञ्चोपनिषदः ।
क.
सं. त्रिदण्डि श्रीमद्विष्वक्सेनाचार्यस्वामी ।
वि. केनोपनिषदः विशिष्टाद्वैतमतानुसारि प्रतिपदार्थोऽस्ति ।
अस्य 'गूढार्थदीपिका' इति नाम ।
प्र. श्रीरामदेवाचार्यः
अच्युत मुद्रणालयः
काशी-1952.

## आंग्ल भाषा

1. ग्रं. दि उपनिषत्स् (भाग 1)
क.
सं. म्याक्स्मुल्लर्
वि. केनोपनिषदः आंग्लानुवादः टिप्पण्यश्च ।
प्र. डोवर् पब्लिकेषन्स्
न्यूयार्क-1884.

2. ग्रं. उपनिषत्स्
सं.
अनु. के.पि.बहादूर्
वि. केनोपनिषदः मूलं; संस्कृतांग्ललिप्यामस्ति ।
प्र. हेरिटेज् पब्लिकेषन्स्
प्रिण्ट्वेल्स् प्रेस्
देहलि-1979.

3. ग्रं. दि टेन् प्रिन्सिपल् उपनिषत्स्
क.
सं. पुरोहितस्वामी तथा डब्ल्यु.बि. ईट्स्
वि. केनोपनिषदः आंग्लभाषायां विवरणमस्ति ।
प्र. फेबर् अण्ड् फेबर् लिमिटेड्
लण्डन्-1975

4. ग्रं. उपनिषत्स्-रि-टोल्ड्
क.
सं. वि. हेच्. दाते
वि. केनोपनिषदः आंग्लभाषायां विवरणमस्ति ।
प्र. अलैड् पब्लिकेषन्स् प्रैवेट् लिमिटेड्
बम्बई-1979.

5. ग्रं. गैड् टु दि उपनिषत्स्
क.
सं. एम्. पि. पण्डित्
वि. केनोपनिषदः कानिचित्कठिनपदानां आंग्लभाषायां विवरणमस्ति ।
प्र. दीप्ति पब्लिकेषन्स्
जुपिटर् प्रेस्
मद्रास्-1972.

6. ग्रं. दि मेसेज् आफ् दि उपनिषत्स्
क. स्वामिरङ्गनाथानन्दः
वि. केनोपनिषदः मूलं देवनागरिलिप्यां, तात्पर्यं आंग्लभाषायां च ।
प्र. भारतीय विद्याभवन्
राणिभारती प्रेस्
बम्बई-1971

7. ग्रं. एयूट् उपनिषत्स्
सं. स्वामीगभीरानन्दः
वि. केनोपनिषदः मूलं देवनागरीलिप्यां, प्रतिपदार्थं विस्तृतव्याख्यानं च आंग्लभाषायां सन्ति ।
प्र. अद्वैताश्रमः, मायावरम्
यूनियन् प्रेस्, कल्कत्ता-1977.

8. ग्रं. रामानुज आन् दि उपनिषत्स्
क. एस्. एस्. राघवाचार्यः
वि. भगवद्रामानुजाचार्याणां श्रीभाष्यादिग्रन्थोदाहृत केनोपनिषन्मंत्राणामभिप्रायः आंग्लभाषायामस्ति ।
प्र. एम्. रङ्गाचार्य मेमोरियल् ट्रस्ट्
विद्या प्रेस्, मद्रास्-1972.

## हस्तलिखिततालपत्राणि

गवर्न्मेण्ट् ओरियण्टल् लैब्ररि, मैसूर्
केनोपनिषद्भाष्यम् (रङ्गरामानुजः)-ग्रन्थलिपिः-संख्या-3464.

अडैयार् लैब्ररि, मद्रास्
केनोपनिषद्भाष्यम् (रङ्गरामानुजः)-ग्रन्थलिपिः-भाग-1 संख्या.29B16

सेन्टरल् ग्रन्थालयः, बरोडा
केनोपनिषद्भाष्यम् (रङ्गरामानुजः)-देवनागरी-भाग-1 संख्या-3921

卐卐卐卐卐

# सङ्केताक्षरसूचनी

| | | |
|---|---|---|
| 1. | आनन्दभाष्यम् | आ.भा. |
| 2. | तैत्तिरीये नारायणोपनिषत् | तै.ना. |
| 3. | तैत्तिरीयोपनिषत् आनन्दवल्ली | तै.उ.आ. |
| 4. | प्रतिपदार्थदीपिका | प्र.दी. |
| 5. | प्रश्नोपनिषत् | प्र.उ. |
| 6. | बृहदारण्यकोपनिषत् | बृ.उ. |
| 7. | भगवद्गीताभाष्यम् | भ.गी.भा. |
| 8. | यादवाभ्युदयम् | यादवा. |
| 9. | रङ्गरामानुजभाष्यम् | रं.भा. |
| 10. | श्रीभाष्यं जिज्ञासाधिकरणम् | श्री.भा.जि. |
| 11. | श्वेताश्वतरोपनिषत् | श्वे.उ. |
| 12. | सुबोधिनी | सु. |

अस्यामुपनिषदि पाठभेदसंग्रहार्थं स्वीकृतग्रन्थानां सङ्केत एवं दत्तः ।

| ग्रन्थनाम | लिपिः | सङ्केतः |
|---|---|---|
| उभयवेदान्तग्रन्थमाला | | |
| संस्कृतप्रथमसरः | देवनागरी | क |
| श्री. व. न. कृष्णमाचार्यसम्पादितग्रन्थः | ग्रन्थ | ख |
| श्री. धर्माधिकारि चक्रवर्तिअय्यंगार्य-सम्पादितग्रन्थः | तेलुगु | ग |

*****

## ABOUT THIS VOLUME

*KENOPANISHAD* derives its name by the opening word "*KENA*:" i.e., 'by Whom?' The question from whence the life principle [ *Prana* ], mind [ *Manas* ] and the five senses [ *Indriyas* ] derive their individual capacities has been answered in this beautiful Upanisad, thereby explaining the role of the Supreme self [ *Parabrahman* ] as the prime cause of all Knowledge .

The present volume is the first in Sanskrit in the series of critical editions of the major Upanisads with the available Visistadvaitic Commentaries. The book opens with a scholarly introduction followed by the text of the Upanisad in full. Word by word meaning, purport of each passage, texts of different commentaries, explanatory notes and gist of available commentaries, can be found in this handy volume being systematically recorded with appropriate titles and subtitles. Variant readings and explanations to difficult words and phrases are given in the footnotes.

Elaborate and analytical information is provided in the ten indeces that follow. They are i) Index of Manthras, ii) Index of quotations, iii) Index of words having a number of meanings in different contexts as explained by various commentators, iv) List of names used to denote the Supreme Self [ Parabrahman ], v) List of names used to denote various deities, vi) Essence of Kenopanisad in five Sanskrit verses, vii) Life sketches of commentators, viii) Life sketches of authors quoted by commentators, ix) Index of passages of Kenopanisad found in other Vedantic texts with explanations and x) Bibliography. The language used is simple and the elaborate information provided helps the students of Sanskrit to derive maximum benefit for an indepth study of *Vedanta darshana* by perusing this volume .